'मास्टर' मणिमालायाः १३६ सङ्ख्यको मणिः ( व्याकरणविभागे १७ )




सोत्तर-

# सिद्धान्तकौमुदीस्थप्रयोगसूची

[ सञ्ज्ञाप्रकरणादि-स्त्रीप्रत्ययान्ता ]

प्रथमखण्डम्

[ परीक्षोपयोगि अत्युत्तमं संस्करणम् ]

संस्कर्त्ता—

श्रीशिवदत्तमिश्रशास्त्री

'मास्टर' मणिमालायाः १३६ सङ्ख्यको मणिः ( व्याकरणविभागे १७ )

* श्रीः *

सोत्तरा—

# सिद्धान्तकौमुदीस्थप्रयोगसूची ।

[ सञ्ज्ञाप्रकरणादि-स्त्रीप्रत्ययान्ता ]

तस्याः—

( प्रथमखण्डम् )

( सन् १९४१ आरभ्य १९४५ पर्यन्तप्रश्नपत्रयुता च )

—०—

गोरक्षपुरमण्डलान्तर्गत-'मझोली राज्य'-निवासि-पण्डितश्रीकान्तमिश्र-शर्मणाम्पौत्रेण पण्डितश्रीसन्तशरणमिश्रशर्मणाम्पुत्रेण

पण्डितश्रीशिवदत्तमिश्रशास्त्रिणा

सङ्कलिता संशोधिता च ।

—०—

सा च

काशीस्थ—'संस्कृत-बुकडिपो'—इत्यस्याऽध्यक्षैः

मास्टर खेलाड़ीलाल ऐण्ड सन्स महोदयैः

स्वीये "मास्टर-प्रिण्टिङ्ग-वर्क्स"ऽभिधयन्त्रालये

मुद्रापयित्वा प्रकाशिता ।

—०—

द्वितीयं संस्करणम् ] सन् १९४६ ई० [ मूल्यम् ॥=)

# ❀ प्रास्ताविकं किञ्चिद्वक्तव्यञ्च। ❀

अयि मान्यवरा विद्वांसः ! मित्रवराश्छात्राश्च !!

विदितमेव प्रायो भवतां यत् सत्स्वपि विविधशास्त्रेषु सकलशास्त्राग्रगण्यं सततबहुकालाऽत्यन्तक्लिष्टपरिश्रमसाध्यञ्च व्याकरणशास्त्रमेव प्रथमं विद्यते ।

तत्र सुगृहीतनामधेयैः महामहोपाध्यायविद्वत्प्रकाण्डश्रीभट्टोजिदीक्षितैर्विरचिता "वैयाकरणसिद्धान्तकौमुदी" प्रथमं प्रविविक्षूणामतिसुकुमारमतीनां छात्राणां कृतेऽत्यखण्डपरिश्रमेऽत्यन्तक्लिष्टतया स्मरणपथं नाऽऽयातीति केषां स्यादविदितमन्तेवासिनाम् । तत्रापि प्रकरणक्रमेण सञ्ज्ञाप्रकरणादारभ्य स्त्रीप्रत्ययान्तो भागस्त्वतीव क्लिष्ट इति नाऽत्र सन्देहलेशः । किम्बहुना प्रतिसंवत्सरमनुभवन्त्येव श्रीमन्तः ।

इत्थं विद्यार्थिनामनेकविधां दुरवस्थामवलोकयद्भिः "मास्टर खेलाड़ीलाल ऐण्ड सन्स, संस्कृत बुकडिपो" नामक-संस्थायाः सञ्चालकैः श्रीबाबू वैजनाथप्रसादयादवमहोदयैर्भृशमुत्साहितैरस्माभिः "सोत्तरा-सिद्धान्त-कौमुदीस्थप्रयोगसूची" नाम पुस्तकं सङ्कलय्य भवतामेव भद्राय सविधे समुपस्थापितञ्च ।

आशासे चाऽमुं ग्रन्थमनुसरतां छात्राणां सर्वथा प्रकाममभिमतफलप्राप्तिर्भविष्यतीति ।

अभ्याससौकर्याय काशीस्थ-राजकीय-संस्कृतकालेजस्य पञ्चवर्षाणां प्रश्नोत्तरलेखनप्रकारसहितानि प्रश्नपत्राण्यपि ग्रन्थान्ते संयोजितानि ।

सुष्ठुकर्गलादि-समन्वितामप्येनामत्यन्तसुलभेनैव मूल्येन प्रकाशयतां "संस्कृत-बुकडिपो"ऽध्यक्षाणां स-भ्रातृकाणां श्रीबाबू जगन्नाथप्रसादयादवमहोदयानामहर्निशमेधमानमभ्युदयं श्रीविश्वनाथात् प्रार्थये ।

अपि च गोरक्षपुरमण्डलान्तर्गत-'पाण्डेय-भठवा'-ग्रामनिवासि-पण्डित-श्रीविश्वनाथपाण्डेयमहोदयानामहमस्मि कृतज्ञः, येषां प्रेरणया प्रवृत्तोऽस्मिन्कार्ये ।

प्रार्थये चेदस्यां मतिमान्द्याद् दृष्टिदोषान् मुद्रकदोषाद्वोत्पद्यमाना अशुद्धयः स्युस्तर्हि—

'गच्छतः स्खलनं क्वापि भवत्येव प्रमादतः ।
हसन्ति दुर्जनास्तत्र समादधति सज्जनाः ॥'

—इति न्यायेनाऽवश्यमेव क्षन्तव्या भवेयुः श्रीमद्भिरित्यलं पल्लवितेनेति शम् ।

'वसन्तपञ्चमी'
फरवरी, १९४६ ई०

विदुषामनुचरः—
श्रीशिवदत्तमिश्रशास्त्री

* श्रीवटुकभैरवाय नमः *

# विषयानुक्रमणिका





—०—

५०
९६

* श्रीसङ्कष्टनाशिन्यै नमः *

पण्डितश्रीशिवदत्तमिश्रशास्त्रिसङ्कलिता

सोत्तरा—

# सिद्धान्तकौमुदीस्थप्रयोगसूची

—◁*▷—

## [ तस्याः प्रथमखण्डम् ]

यत्पादद्वयसेवनान्मनुजनो मोहार्णवं लङ्घयन्,
ख्यातिं याति परामिलातल इह प्राज्यश्रियं धारयन् ।
भव्यं भव्यगुणाऽन्वितं बुधवरं सर्वार्थदं मङ्गलम्,
श्रीमन्तं पितरञ्च 'सन्तशरणं' नित्यं नमस्कुर्महे ॥

### ❁ अथ सञ्ज्ञाप्रकरणम् ❁

| | |
|---|---|
| आ ये। | अर्वाङ् |

१—"उच्चैरुदात्तः"—'आ ये' इत्यत्र "निपाता आद्युदात्ताः" इति सूत्रेणाऽऽकार उदात्तः, यच्छब्दस्य प्रातिपदिकतया "फिषोऽन्त उदात्तः" इत्यनेनाऽन्तोदात्तः, ततः परस्य जसः सुप्त्वात् "अनुदात्तौ सुप्पितौ" इत्यनुदात्तत्वे "त्यदादीनामः" इत्यत्वे "अतो गुणे" इत्यनेन पररूपत्वे "जसः शी" इति श्यादेशे "आद्गुणः" इति गुणे च कृते "एकादेश उदात्तेनोदात्तः" इत्येकार उदात्तः, पूर्वोक्तं रूपं सिद्धम् ।

२—"नीचैरनुदात्तः"—'अर्वाङ्' इत्यत्र अर्वन्तमञ्चतीति विग्रहे "ऋत्विग्-दधृक्-स्रग्-दिगुष्णिगञ्चु-युजि-क्रुञ्चां च" इति सूत्रेणाऽञ्चतेः सुप्युपपदे 'क्विन्'—

'क्व वोऽश्वाः'
'रथानां न ये ऽराः'
'शतचक्रं यो ह्यः'
'अग्निमीले पुरोहितम्'

प्रत्यये, कनावितौ, अथवा 'ऋ-गतौ' इत्यस्माद्धातोः "वमिपद्यर्ति" इत्यादिना वनिपि, गुणे च ततो निष्पन्न—'अर्वन्' शब्दात् "धातोः" इत्यन्तोदात्तः। वनिपा पित्त्वेन "अनुदात्तौ सुप्पितौ" इत्यनुदात्तत्वम्। अञ्चतेरकारोऽपि "धातोः" इत्यन्तोदात्तः, "उपपदमतिङ्" इति समासे, समासस्येति निघाते "अनुदात्तं पदमेकवर्जम्" इति सूत्रेणाऽऽद्योऽकारोऽनुदात्तः।

१—'क्व' इत्यत्र "किमोऽत्" इति जातस्याऽत्प्रत्ययस्याकारः "तित्स्वरितम्" इति स्वरितः। 'व' अत्र "अनुदात्तं सर्वमपादादौ" इति सूत्रेणाऽनुदात्तम्। 'अश्वाः' इत्यत्राऽशेः कनि, तित्स्वरेणाऽऽद्युदात्तम्। ततश्च 'वः—अश्वाः' इत्यनयोः संहितायां तु "एकादेश उदात्तेनोदात्तः" इति सूत्रेणोकार उदात्तः, ततश्च 'क्व' इति स्वरितोत्तरार्द्धानुदात्तस्य ह्रस्वार्द्धस्य 'व' इत्युदात्तपरत्वात्स्वरितश्रवणं स्पष्टमिति शम्।

२—'ये' 'अराः' इत्यत्र द्वयोरपि प्रातिपदिकत्वेन "फिषोऽन्त उदात्तः" इति फिट्स्वरेणाऽन्तोदात्तः, ततश्च 'अरा' इत्याद्यस्याऽकारस्य परिशेषादनुदात्तत्वम्, एवञ्च "स्वरितो वाऽनुदात्ते पदादौ" इत्यनेन पक्षे स्वरितत्वम्, ततश्च 'ये' इति दीर्घस्वरितस्य 'राः' इत्युदात्तपरतया श्रवणं स्पष्टम्।

३—'यः' इत्यत्र प्रातिपदिकत्वात् 'यत्' शब्दात्सौ, फिट्स्वरेणाऽन्तोदात्तस्वरः, त्यदाद्यत्वे, पररूपत्वे, सकारस्य रुत्वे, उत्वे "आद्गुणः" इति गुणे च कृते, उदात्तेनैकादेशाद्योकार उदात्तः, पूर्वोक्तं रूपं साधु। 'अह्वः' इत्यत्र 'अह—व्याप्तौ' इत्यस्माद्धातोः कर्मणि 'ण्यत्'प्रत्ययेऽनुबन्धलोपे "तित्स्वरितम्" इति स्वरितान्तत्वादकारस्य शेषनिघातत्वे, ओकारेण सह एकादेशे च कृते "स्वरितो वाऽनुदात्ते पदादौ" इति सूत्रेणौकारस्य स्वरितत्वे, प्रातिपदिकसञ्ज्ञायां सौ रुत्वे विसर्गे चोक्तं रूपं सिद्धम्।

४—'अग्निमीले' इत्यत्राऽन्तोदात्ताग्निशब्दस्याऽनुदात्तेनाऽमा जायमानः पूर्वरूपस्यैकादेशोऽप्युदात्त एव। 'ईले' इत्यत्र 'ईड-स्तुतौ' इत्यस्माद्धातोर्लटि, लटः

| | |
|---|---|
| पलिक्नी: | तेन–'दधी'त्यस्य हरति शीतल- |
| चखूलतुः | मित्यादयः |
| अग्निः | 'विश्वपाभि'रित्यत्र |
| 'घ्नन्ती'त्यत्र | |

❀ इति सञ्ज्ञाप्रकरणम् ❀

—o❀o—

## ❀ अथाऽच्सन्धिप्रकरणम् ❀

| | |
|---|---|
| सुद्ध्युपास्यः | मद्ध्वरिः |

स्थाने प्रथमपुरुषैकवचने इटि "टित आत्मनेपदानां टेरे" इति सूत्रेण टेरेत्वे "द्वयोश्चाऽस्य स्वरयोः" इत्यादिना प्रातिशाख्येन डकारस्य ळत्वे 'ईळे' इति रूपम्, अत्र 'ईळे'—इति सर्वस्याऽपि पदस्य "तिङतिङः" इत्यनेनाऽनुदात्तस्वरः, ततः 'अग्निमीळे'—इति पदयोः संहितायाम्, "उदात्तादनुदात्तस्य स्वरितः" इत्यनेन यात्वीकारस्य स्वरितः, 'ळे' इत्यत्रैकारस्य तु—"स्वरितात्संहितायामनुदात्तानाम्" इति सूत्रेण प्रचयपर्यायैकश्रुतिरिति दिक् ।

१—"नाऽज्झलौ" इति निषेधो यद्यप्यक्षरसमाम्नायिकानामेव, तथापि दीर्घाऽऽकार-हकारयोः सवर्णसञ्ज्ञा न, तत्राऽऽकारस्यापि प्रश्लिष्टत्वात् । तेन 'विश्वपाभि'रित्यत्र "होढः" इति सूत्रेण ढत्वं न भवतीत्युट्टङ्कितं मूले ।

२—'सुधी + उपास्यः'—इत्यवस्थायां "तस्मिन्निति निर्दिष्टे पूर्वस्य" "स्थानेऽन्तरतमः" इति सूत्रद्वयसहकारेण "इको यणचि" इति सूत्रेण तालुस्थानजन्य-धकारोत्तरवर्तिन ईकारस्य स्थाने तालुस्थानजन्यो यकारे यणि 'सुध्य् + उपास्य' इति स्थिते "अनचि च" इति धकारस्य द्वित्वे 'सुध्ध्य् + उपास्य' इति भूते । अत्र "स्थानिवदादेशोऽनल्विधौ" इति सूत्रेण यकारस्य स्थानिवत्त्वेनाऽच्त्वमाश्रित्य "अनचि च" इति द्वित्वनिषेधस्तु न शङ्क्यः ?, 'अनल्विधावि'ति निषेधात् । न च "अचः परस्मिन्पूर्वविधौ" इत्यनेन स्थानिवद्भावं समापाद्य द्वित्वाऽप्राप्तिरिति [illegible] ?, "न पदान्त-द्विर्वचन-वरे-यलोप-स्वर-सवर्णा-ऽनुस्वार-दीर्घ-जश्चर्विधिषु" इति निषेधात् । ततः "झलां जश् झशि" इति सूत्रेण दन्तस्थानजन्य-पूर्वधकारस्य

धात्त्रंशः
लाकृतिः
पुत्त्रादिनी त्वमसि पापे !
आक्रोशे किम् ? पुत्त्रादिनी
सर्पिणी
पुत्त्रपुत्रादिनी त्वमसि पापे !
पुत्त्रहती, पुत्त्त्रहती
पुत्रजग्धी, पुत्त्त्रजग्धी
ईन्न्द्रः, इन्द्रः
राष्ष्ट्रम्, राष्ट्रम्
अर्र्कः

ब्रह्मा
दाँत्रम्
पात्रम्
हर्य्य्यनुभवः, हर्य्यनुभवः
नह्य्य्यस्ति, नह्यस्ति
लोपारम्भफलं तु—
'आदित्यं हविः' इत्यादौ
नेह—माह्यत्म्यम्
हरये[10]
विष्णवे
नायकः

दकारे, "अदर्शनं लोपः" इति लोपसञ्ज्ञायामवगतायाम्, "अलोऽन्त्यस्य" इत्ये तत्सहकारेण "संयोगान्तस्य लोपः" इति यकारलोपे प्राप्ते "यणः प्रतिषेधो वाच्यः इति वार्त्तिकेन तन्निषेधे 'सुद्ध्युपास्यः' इति रूपं सिद्धम्। ततो "यणो मये वाच्ये" इति 'मय इति पञ्चमी, यण इति षष्ठी'ति पक्षे यकारस्यापि द्वित्वे क्र धकार-यकारयोर्द्वित्वविकल्पाच्चत्वारि रूपाणि भवन्ति, यथा—एकधकारकमेकयका रकं प्रथमं रूपम्, द्विधकारकं द्वियकारकं द्वितीयं रूपम्, द्विधकारकमेकयकार तृतीयं रूपम्, एकधकारकं द्वियकारकं चतुर्थं रूपमिति शम्।

१—अत्र "अनचि च" इति सूत्रेण प्राप्तस्य द्वित्वस्य "नादिन्याक्रोशे पुत्रस्य" इति निषेधः। २—तत्त्वकथने तु द्विर्वचनं भवत्येव। ३—"तत्परे च" इति द्वित्वनिषेधः। ४—"वा हत-जग्धयोः" इति वार्त्तिकेन वैकल्पिके द्वित्वम्। ५—"त्रिप्रभृतिषु शाकटायनस्य" इति पाक्षिकद्वित्वम्। ६—"सर्वत्र शाक ल्यस्य"। ७—"दीर्घादाचार्याणाम्"। ८—"अचो रहाभ्यां द्वे"। ९—"हलो यमां यमि लोपः"। १०—"एचोऽयवायावः"। "तस्य लोपः" इति सूत्रेण य योर्लोपो न, उच्चारणसामर्थ्यात्। एवञ्चेत्सञ्ज्ञापीह न भवति, प्रयोजनाभाव

पावकः
[1]गोर्विकारो 'गव्यम्'
नावा तार्यं 'नाव्यम्'
[2]गव्यूतिः
[3]लव्यम्
अवश्यलाव्यम्
तन्निमित्तस्यैवेति किम्?
ओयते—औयत
क्षेतुं शक्यं [4]क्षय्यम्
जेतुं शक्यं जय्यम्
शक्यार्थे किम्?
क्षेतुं जेतुं योग्यं क्षेयं पापं जेयं

मनः
[5]क्रय्यम्, क्रेयमन्यत्
[6]हर एहि, हरयेहि
विष्ण इह, विष्णविह
श्रिया उद्यतः, श्रियायुद्यतः
गुरा उत्कः, गुरावुत्कः
'[7]कानि सन्ति' 'कौ स्तः'
[8]उपेन्द्रः
रमेशः
गङ्गोदकम्
[9]कृष्णर्धिः, कृष्णर्द्धिः, कृष्णर्दद्धिः
*तवल्कारः

१—"वान्तो यि प्रत्यये" । २—"गोर्यूतौ छन्दस्युपसङ्ख्यानम्" "अध्वपरिमाणे च" । 'वान्त' इत्यत्र वकाराद्गोर्यूतावित्यत्र छकाराद्वा पूर्वभागे 'लोपो व्योर्वलि'ति लोपेन वकारः प्रश्लिष्यते । तेन श्रूयमाणवकारान्त आदेशः स्यात् । वकारो न लुप्यत इति यावत् । ३—"धातोस्तन्निमित्तस्यैव" । ४—"क्षय्य-जय्यौ शक्यार्थे" । ५—"क्रय्यस्तदर्थे" । ६—"लोपः शाकल्यस्य" । ७—अत्राऽस्तेरल्लोपस्य स्थानिवत्त्वेन यणाऽवादेशौ प्राप्तौ 'न पदान्ते'ति सूत्रेण पदान्तविधौ तन्निषेधान्न स्तः । ८—"आद्गुणः" । ९—'कृष्ण × ऋद्धि'रित्यवस्थायां "स्थानेऽन्तरतमः" "उरण् रपरः" इति सूत्रद्वयसहकारेण "आद्गुणः" इति गुणे नारि "अचो रहाभ्यां द्वे" इत्यनेन द्वित्वे "झरो झरि सवर्णे" इति लोपे कृतेऽनयोर्विकल्पे त्रीणि रूपाणि जायन्ते । तदेव ध्वनयन्नाह मूले—द्वित्वाऽभावे लोपे सत्येकधम्, असति लोपे द्वित्वलोपयोर्वा द्विधम्, सति द्वित्वे लोपे चाऽसति त्रिधमिति ।

* अस्य चत्वारि रूपाणि भवन्ति । तदुपदिष्टं मूले—
'द्वित्वं लस्यैव कस्यैव नोभयोरुभयोरपि ।
तवल्कारादिषु बुधैर्बोध्यं रूपचतुष्टयम् ॥' इति ॥

कृष्णैकत्वम्[1]
गङ्गौघः
देवैश्वर्यम्
कृष्णौत्कण्ठ्यम्
उपैति[2]
उपैधते
प्रष्ठौहः
एजाद्योः किम् ? उपेतः
मा भवान्प्रेदिधत्
ते[3]—'अवेहि' इति
अक्षौहिणी[4] सेना
स्वैरः[5]
स्वैरी
स्वैरिणी[6]

प्रौहः[7]
प्रौढः
प्रौढवान्
प्रौढिः
एषः, एष्यः
प्रैषः, प्रैष्यः
ईषः, ईष्यः
प्रेषः, प्रेष्यः
सुखार्तः[9]
तृतीयेति किम् ? परमर्तः
प्रार्णम्[10]
वत्सतरार्णमित्यादि
ऋणार्णम्
दशार्णो देशः, नदी च दशार्णा

१—वृद्धिरेचि"। २—"एत्येधत्यूठ्सु"। ३—'पुरस्तादपवादा अनन्तरान् विधीन् बाधन्ते नोत्तरान्' इति न्यायेनेयं वृद्धिः "एङि पररूपमि" त्यस्यैव बाधिका न तु "ओमाङोश्च" इति सूत्रस्यापि, तेना 'ऽवैही' त्यत्र वृद्धिरसाधुरेवेति दिक्। ४—"अक्षादूहिन्यामुपसङ्ख्यानम्"। ५—"स्वादीरेरिणोः। ६—प्रातिपदिकग्रहणे लिङ्गविशिष्टस्यापि ग्रहणम्। अत्र सामान्यरूपेण वा प्रातिपदिकबोधकशब्दग्रहणे सति लिङ्गबोधकप्रत्ययविशिष्टस्यापि ग्रहणं भवति, तेन 'स्वैरिणी' इत्यपि रूपं सञ्जायते। ७—"प्रादूहोढोढ्येषैष्येषु"। ८—अर्थवद्ग्रहणे नाऽनर्थकस्य ग्रहणम्। 'भ्रस्जे'ति सूत्रे राजेः पृथग्भ्राजिग्रहणाज्ज्ञापकात्। तेन 'ऊढ' ग्रहणेन क्तान्तो गृह्यते, न तु क्तवत्वन्तस्यैकदेशः। ९—"ऋते च तृतीयासमासे"। १०—"वत्सतर-कम्बल-वसनार्ण-दशानामृणे"।

प्रार्च्छति[1]
उपार्च्छति
प्रार्षभीयति[2], प्रर्षभीयति
प्राल्कारीयति[3], प्रल्कारीयति
उपल्कारीयति, उपल्कारीयति
प्रेजते[4]
उपोषति
उपेडकीयति, उपैडकीयति
प्रोघीयति, प्रौघीयति
क्वेवं[5] भोक्ष्यसे ?
अनियोगे किम् ? तवैव
शकन्धुः[6] । कर्कन्धुः
कुलटा । सीमन्तः केशवेशे
सीमान्तोऽन्यः
मनीषा
हलीषा
लाङ्गलीषा
पतञ्जलिः
सारङ्गः पशुपक्षिणोः
साराङ्गोऽन्यः
मार्तण्डः
स्थूलोतुः[7], स्थूलौतुः
बिम्बोष्ठः, बिम्बौष्ठः
समासे किम् ? तवौष्ठः
शिवायोंनमः[8]
शिव एहि—शिवेहि
पटत्[9] इति—पटिति
श्रदिति[10]
पटत्पटेति[11]
पटत्पटदिति[12]

१—"उपसर्गादृति धातौ" "अन्तादिवच्च" "खरवसानयोर्विसर्जनीयः" । अन्तवद्भावेन पदान्तरेफस्य न विसर्गः, 'उभयथर्क्षु' 'कर्तरि चर्षिदेवतयो'रित्यादि-निर्देशात् । उपसर्गेणैव धातोराक्षेपे सिद्धे 'धाता'विति योगविभागेन पुनर्वृद्धि-विधानार्थम् । तेन—'ऋत्यक'इति पाक्षिकोऽपि प्रकृतिभावोऽत्र न भवति । २—"वा सुप्यापिशलेः" । ३—सावर्ण्याल्लृवर्णस्य ग्रहणम् । ४—"एङि पररूपम्" । ५—"एवे चाऽनियोगे" । ६—"अचोऽन्त्यादि टि" "शकन्ध्वादिषु पररूपं वाच्यम्" । ७—"ओत्वोष्ठयोः समासे वा" । ८—"ओमाङोश्च" । ९—"अव्यक्तानुकरणस्यात इतौ" । १०—"एकाचो न" । ११—"नाऽऽम्रेडितस्यान्त्यस्य तु वा" । "डाचि बहुलं द्वे भवतः" इति बहुलवचनाद् द्वित्वम् । "तस्य परमाम्रेडितम्" । १२—"झलां जशोऽन्ते" ।

दैत्यारिः
श्रीशः
विष्णूदयः
अचि किम् ? 'कुमारी शेते'[1]
अकः किम् ? हरये
होतॄकारः, होतृकारः[2]
होत्लृकारः,[3]
होतृकारः[4]
हरेऽव[5]
विष्णोऽव
गोअग्रम्, गोऽग्रम्[6]
एङन्तस्य किम् ? चित्रग्वग्रम्
पदान्ते किम् ? गोः
गवाग्रम्[7]
पदान्ते किम् ? गवि
गवाक्षः

गवेन्द्रः[8]
एहि कृष्ण३ अत्र गौश्चरति[9]
हरी एतौ
नित्यमिति किम् ? [10]'हरी एतौ'
चक्रि[11] अत्र, चक्रयत्र
पदान्ता इति किम् ? गौर्यौ
वाप्यश्वः[12]
पार्श्वम्[13]
ब्रह्म[14] ऋषिः, ब्रह्मर्षिः
आर्च्छत्
सप्तऋषीणाम्,[15] सप्तर्षीणाम्
अभिवादये[16] देवदत्तोऽहं भोः
आयुष्मानेधि देवदत्त३
अभिवादये[17] गार्ग्यहं भोः
आयुष्मती भव गार्गि
नेह—आयुष्मानेधि[18]

१—"अकः सवर्णे दीर्घः"। २—'नाऽऽज्झला'विति सावर्ण्यनिषेधस्तु न दीर्घशकारयोः, ग्रहणकशास्त्रस्य सावर्ण्यविधिनिषेधाभ्यां प्रागनिष्पत्तेः। ३—"ऋति सवर्णे ऋ वा"। ४—"लृति सवर्णे लृ वा"। ५—"एङः पदान्तादति"। ६—"सर्वत्र विभाषा गोः"। ७—"अवङ् स्फोटायनस्य"। ८—"इन्द्रे च" इत्यवङादेशः। ९—"प्लुतप्रगृह्या अचि नित्यम्"। १०—'हरी एता'वित्यत्रापि नित्यमेव प्रकृतिभावो यथा स्या'दिकोऽसवर्णे' इति ह्रस्वसमुच्चितो मा भूत। ११—"इकोऽसवर्णे शाकल्यस्य ह्रस्वश्च"। १२—"न समासे"। १३—"सिति च"। १४—"ऋत्यकः"। १५—समासेऽप्ययं प्रकृतिभावः। १६—"वाक्यस्य टेः प्लुत उदात्तः" "प्रत्यभिवादेऽशूद्रे"। १७—"स्त्रियां न"। १८—नामगोत्रं वा यत्र प्रत्यभिवादवाक्यान्ते प्रयुज्यते तत्रैव प्लुत इष्यते।

आ[1]युष्मानेधि भोः३
आयुष्मानेधीन्द्रवर्म३न्
आयुष्मानेधीन्द्रपालित३
स[2]क्तून् पिब देवदत्त३
हे३[3]राम
राम है३
दे३[4]वदत्त
देवद३त्त
देवदत्त३
गुरोः किम्? वकारात्परस्याऽकारस्य
मा भूत्
अनृतः किम्? कृष्ण३
सु[5]श्लोक३इति
सुश्लोकेति
व[6]त्किम्?
अग्नी३ इति
चि[7]नुँहि३ इति, चिनुहीति

चिनु हि३ इदम्,
चिनु हीदम्
ह[8]री एतौ
विष्णू इमौ
गङ्गे अमू
पचेते इमौ
'मणीवोष्ट्रस्ये'ति
अ[9]मी ईशाः
रामकृष्णावमू आसाते
मात्किम्? अमुकेऽत्र
अस्मे[10] इन्द्राबृहस्पती
ई[11] इन्द्रः
उ उमेशः
आ एवं नु मन्यसे
आ एवं किन्नु तत्
*ईषदुष्णम्—ओष्णम्
अहो[12] ईशाः

१—"भो-राजन्य-विशां वेति वाच्यम्"। २—"दूराद्धूते च"। ३—"हैहे-प्रयोगे हैहयोः"। ४—"गुरोरनृतोऽनन्त्यस्याप्येकैकस्य प्राचाम्"। ५—"अप्लुतवदुपस्थिते"। ६—अप्लुत इत्युक्तेऽप्लुत एव विधीयेत, प्लुतश्च निषिध्येत। तथा च प्रगृह्याश्रये प्रकृतिभावे प्लुतस्य श्रवणं न स्यात्। ७—"ई३ चाक्रवर्मणस्य"। ८—"ईदूदेद्द्विवचनं प्रगृह्यम्"। ९—"अदसो मात्"। १०—"शे"। ११—"निपात एकाजनाङ्"। १२—"ओत्"।

* अत्र भाष्यश्लोकश्चेत्थम्—
'ईषदर्थे क्रियायोगे मर्यादाभिविधौ च यः।
एतमातं ङितं विद्याद्वाक्य-स्मरणयोरङित्॥' इति॥

विष्णो[१] इति, विष्ण इति, विष्णविति

अनार्ष इति किम् ? 'ब्रह्मबन्ध'-वित्यब्रवीत्

उँ[२] इति, विति

ॐ[३] इति

किँ[४]मु उक्तम्, किम्वुक्तम्

सोमो[५] गौरी अधिश्रितः,

मामकी तनू इति

अर्थग्रहणं किम् ? 'वृत्तावर्थान्तरोपसंक्रान्ते मा[६]भूत्'

वाप्यश्वः

दधिँ, दधि

अप्रगृह्यस्य किम् ? अमी

* इत्यच्सन्धिप्रकरणम् *

## ❀ अथ हल्सन्धिप्रकरणम् ❀

हरिश्शेते[७]

रामश्चिनोति

सच्चित्

शार्ङ्गिञ्जय

विश्नः[८]

प्रश्नः

रामष्षष्ठः[९]

रामष्टीकते

पेष्टा

तट्टीका

चक्रिण्ढौकसे

षट्[१०] सन्तः

षट्ते

पदान्तात् किम् ? इट्टे

टोः किम् ? सर्पिष्टमम्

षण्णाम्[११]

१—"सम्बुद्धौ शाकल्यस्येतावनार्षे" । २—"उञः" । ३—'ॐ" ४—"मय उञो वो वा" । ५—"ईदूतौ च सप्तम्यर्थे" । ६—"अणोऽप्रगृह्यस्याऽनुनासिकः" ।

७—"अत्र "स्तोः श्चुना श्चुः" इति श्चुत्वम् । ८—"शात्" इति श्चुत्वनिषेधः । ९—"ष्टुना ष्टुः" इति ष्टुत्वम् । १०—"न पदान्ताट्टोरनाम्" इति ष्टुत्वनिषेधः । ११—'षष्+नाम्' इति स्थिते "स्वादिष्वसर्वनामस्थाने" इति पदान्तत्वात् षकारस्य जश्त्वेन डकारे "प्रत्यये भाषायां नित्यम्" इति डस्य

| | |
|---|---|
| षण्णवतिः | वाग्घरिः[9], वाग्हरिः |
| षण्णगर्यः | तच्छिवः[10], तच्शिवः |
| सन्षष्ठः[1] | तच्छ्लोकेन[11], तच्श्लोकेन |
| वागीशः[2] | अमि किम् ? वाक्श्च्योतति |
| चिद्रूपम् | हरिं[12] वन्दे |
| एतन्मुरारिः[3], एतद्मुरारिः | पदस्येति किम् ? गम्यते |
| चतुर्मुखः[4] | यशांसि[13] |
| तन्मात्रम्[5] | आक्रंस्यते |
| चिन्मयम् | झलि किम् ? मन्यते |
| कथं[6] तर्हि 'मदोदग्राः ककुद्मन्तः' इति ? | अङ्कितः[14] |
| | अञ्चितः |
| तँल्लयः[7] | कुण्ठितः |
| विद्वाँल्लिखति | शान्तः |
| उत्थानम्[8] | गुम्फितः |
| उत्तम्भनम् | कुर्वन्ति[15] |

णत्वे, टवर्गयोगान्नकारस्य ष्टुत्वे 'षण्णाम्' इति रूपं सिद्धम् । अत्र 'न पदान्ता'-दिति निषेधस्तु न शङ्क्यः ?, "अनाम्नवति-नगरीणामिति वाच्यम्" इत्यत्र 'अना'-मिति पर्युदासात् ।

१—"तोः षि" इति ष्टुत्वनिषेधः । २—"झलां जशोऽन्ते" इति जश्त्वम् । ३—"यरोऽनुनासिकेऽनुनासिको वा" । ४—स्थानप्रयत्नाभ्यामन्तरतमे स्पर्शे चरितार्थो विधिरयं रेफे न प्रवर्तते । ५—"प्रत्यये भाषायां नित्यम्" । ६—यवादिगणे दकारनिपातनात् । ७—"तोर्लि" । ८—"उदः स्था स्तम्भोः पूर्वस्य" । ९—"झयो होऽन्यतरस्याम्" । १०—"शश्छोऽटि" "खरि च" । ११—"छत्वममीति वाच्यम्" । १२—"मोऽनुस्वारः" । १३—नश्चाऽपदान्तस्य झलि" । १४—"अनुस्वारस्य ययि परसवर्णः । १५—'कुर्वन्ती'त्यत्र णत्वे प्राप्ते तस्याऽसि--

त्वँङ्करोषि, त्वं करोषि
सँय्यन्ता, संयन्ता
सँव्वत्सरः, संवत्सरः
यँल्लोकम्, यं लोकम्
सम्राट्[2]
किम् ह्मलयति, किं ह्मलयति[3]
किँ ह्यः, किंह्यः
किँ ह्वलयति, किंह्वलयति
किलँ ह्लादयति, किंह्लादयति
किँन्ह्नुते, किंह्नुते
प्राङ्ख्षष्ठः, प्राङ्क्षष्ठः,[6]
प्राङ्षष्ठः
सुगण्ठ्षष्ठः, सुगण्ट्षष्ठः,
सुगण्षष्ठः
षँट्त्सन्तः, षट्सन्तः
सँन्त्सः, सन्सः
*सँञ्छम्भुः, सञ्च्छम्भुः
सञ्च्शम्भुः, सञ्शम्भुः
प्रत्यङ्ङात्मा[10]
सुगण्णीशः
सन्नच्युतः
सँस्स्कर्ता[11], संस्स्कर्ता
पुँस्कोकिलः[12], पुंस्कोकिलः
पुँस्पुत्रः, पुंस्पुत्रः
अम्परे किम् ? पुंक्षीरम्
खयि किम् ? पुंदासः

द्त्वादनुस्वारे परसवर्णे च कृते तस्याऽसिद्धत्वान्न णत्वम् ।

१—"वा पदान्तस्य" । २—"मो राजि समः क्वौ" । ३—"हे मपरे वा" । ४—"यवलपरे यवला वेति वाच्यम्" "यथासङ्ख्यमनुदेशः समानाम्" । ५—"नपरे नः" । ६—ङ्णोः कुक् टुक् शरि" "चयो द्वितीयाः शरि पौष्करसादेरिति वाच्यम्" । ७—"डः सि धुट्" । ८—"नश्च" । ९—"शि तुक्" । १०—"ङमो ह्रस्वादचि ङमुण्नित्यम्" । ११—"समः सुटि" "अत्राऽनुनासिकः पूर्वस्य तु वा" "अनुनासिकात्परोऽनुस्वारः" "विसर्जनीयस्य सः" "सम्पुङ्कानां सो वक्तव्यः" 'समो वा लोपमेके' इति भाष्यम् । "शरः खयः" । एवं सङ्कलनक्रमेणाऽष्टोत्तरशतरूपाणि भवन्ति । १२—"पुमः खय्यम्परे" ।

* एवञ्चाऽत्र रूपसंग्रहश्लोकः—

'अछौ अचछा अचशा अशाविति चतुष्टयम् ।
रूपाणामिह तुक्-छत्व-च-लोपानां विकल्पनात् ॥' इति ॥

पुंख्यानम्[1]
शार्ङ्गिँ[2]श्छिन्धि, शार्ङ्गिंश्छिन्धि
चक्रिँस्त्रायस्व, चक्रिंस्त्रायस्व
पदस्य किम् ? हन्ति
अम्परे किम् ? सन्त्सरुः खड्गमुष्टिः
अप्रशान् किम् ? प्रशान्तनोति
तेन[3]—'वासः क्षौम' मित्यादौ
विसर्ग एव
नॄँ[4]ᳶपाहि, नॄंᳶपाहि,
नॄँःपाहि, नॄंःपाहि,
नॄन्पाहि

काँस्कान्[5], कांस्कान्
कस्कः
कौतस्कुतः
सर्पिष्कुण्डिका
धनुष्कपालम्
स्वच्छाया[6]
शिवच्छाया
आच्छादयति[7]
माच्छिदत्
चेच्छिद्यते
लक्ष्मीच्छाया,[8] [9]लक्ष्मीछाया

* इति हल्सन्धिप्रकरणम् *

—❀—

## ❀ अथ विसर्गसन्धिप्रकरणम् ❀

विष्णुस्त्राता[10]

कः[11] त्सरुः

---

१—"ख्याञादेशे न" २ – "नश्छव्यप्रशान्"। ३–'येन नाप्राप्ते यो विधिरारभ्यते स तस्य बाधको भवति' इति न्यायेन 'विसर्जनीयस्य सः' इत्यस्यापवादोऽयम्, न तु 'शर्परे विसर्जनीय' इत्यस्य। ४—"नॄन्पे" "कुप्वोः ᳵक ᳶपौ च"। ५—"कानाम्रेडिते" "कस्कादिषु च"। ६—"संहितायाम्" इत्यधिकृत्य, "छे च"। ७—"आङ्माङोश्च"। ८—"दीर्घात्"। ९ – "पदान्ताद्वा"।

१०—"विसर्जनीयस्य सः" इति सः। ११—"शर्परे विसर्जनीयः"

घनाघनः क्षोभणश्चर्षणीनाम्
हरिः[1] शेते, हरिश्शेते
रामस्थाता,[2] रामः स्थाता
हरिस्फुरति, हरिः स्फुरति
क ᳲ करोति, कः करोति
क ᳲ खनति, कः खनति
क ᳲ पचति, कः पचति
क ᳲ फलति, कः फलति
पयस्पाशम्[3]
यशस्कल्पम्
यशस्कम्
यशस्काम्यति
प्रातःकल्पम्[4]
नेह[5]—गीः काम्यति
सर्पिष्पाशम्[6]
सर्पिष्कल्पम्
सर्पिष्कम्
सर्पिष्काम्यति
नमस्करोति[7]
नमः करोति[8]
पुरस्करोति
अगतित्वान्नेह—'पुरः प्रवेष्टव्याः'।
निष्प्रत्यूहम्[9]
आविष्कृतम्
दुष्कृतम्
अप्रत्ययस्य किम्? अग्निः करोति
वायुः करोति
तेनेह[10] न—मातुः कृपा
मुहुः[11] कामा
तिरस्कर्ता,[12] तिरःकर्ता
द्विष्करोति,[13] द्विः करोतीत्यादि
कृत्वोर्थे किम्? चतुष्कपालः
सर्पिष्करोति[14], सर्पिःकरोति
धनुष्करोति, धनुः करोति

१—"वा शरि"। २—खर्परे शरि वा विसर्गलोपो वक्तव्यः"। ३—"सोऽपदादौ" "पाश-कल्प-काम्येष्विति वाच्यम्"। ४—"अनव्ययस्येति वाच्यम्"। ५—"काम्ये रोरेवेति वाच्यम्"। ६—"इणः षः"। ७—"नमस्पुरसोर्गत्योः"। ८—साक्षात्प्रभृतित्वात्कृञो योगे विभाषा गतिसञ्ज्ञा, तदभावे-। ९—"इदुदुपधस्य चाऽप्रत्ययस्य"। १०—एकादेशशास्त्रनिमित्तकस्य न षत्वम्, कस्कादिषु भ्रातुष्पुत्रशब्दस्य पाठात्। ११—"मुहुसः प्रतिषेधः"। १२—"तिरसोऽन्यतरस्याम्"। १३—"द्विस्त्रिश्चतुरिति कृत्वोऽर्थे"। १४—"इसुसोः सामर्थ्ये"।

सामर्थ्ये किम् ? तिष्ठतु सर्पिः, पिब त्वमुदकम्

सर्पिष्कुण्डिका[2]

धनुष्कपालम्

अनुत्तरपदस्थस्येति किम् ? परमसर्पिःकुण्डिका

अयस्कारः[3]

अयस्कामः

अयस्कंसः

अयस्कुम्भः

अयस्पात्रम्

अयःसहिता कुशा-अयस्कुशा

अयस्कर्णी

अतः किम् ? गीःकारः

अनव्ययस्य किम् ? स्वःकामः

समासे किम् ? यशःकरोति

अनुत्तरपदस्थस्य किम् ? परमयशःकारः

अधस्पदम्[4]

शिरस्पदम्

अधःपदम्

शिरःपदम्

परमशिरःपदम्

भास्करः[5]

* इति विसर्गसन्धिप्रकरणम् *

## ❀ अथ स्वादिसन्धिप्रकरणम् ❀

शिवोऽर्च्यः[6]

अत इति तपरः किम् ? देवा अत्र

अतीति तपरः किम् ? श्व आगन्ता

अप्लुतात्किम् ? एहि सुस्रोत ३[7]

१—"नित्यं समासेऽनुत्तरपदस्थस्य" । २—कस्कादिषु सर्पिष्कुण्डिकाशब्दोऽसमासे व्यपेक्षाविरहेऽपि षत्वार्थो, व्यपेक्षायां नित्यार्थश्च । ३—"अतः कृ-कमि-कंस कुम्भ-पात्र कुशा-कर्णीष्व-नव्ययस्य" । ४—"अधः शिरसी पदे" । ५—"कस्कादिषु च" ।

६—"ससजुषो रुः" "अतो रोरप्लुतादप्लुते" "प्रथमयोः पूर्वसवर्णः" "नादिचि" "आद्गुणः" "एङः पदान्तादति" । ७—प्लुतस्याऽसिद्धत्वादतः ऽश्रम् । 'अप्लुता'दिति विशेषणे तु तत्सामर्थ्यान्नाऽसिद्धत्वम् । तपरकरणस्य तु सामर्थ्यम्, दीर्घनिवृत्त्या चरितार्थत्वात् ।

अत्र स्वाहि
अप्लुते इति किम् ? तिष्ठतु पय अ३ग्निदत्त
शिवो[1] वन्द्यः
प्रातरत्र[2]
भ्रातर्गच्छ
देवाँ[3] इह, देवायिह
अशि किम् ? देवाँः सन्ति
भो[5] अच्युत, भोयच्युत
पदान्तस्य किम् ? तोयम्
सेँ[6] उ एकाग्निः
पदे किम् ? तन्त्रयुतम्
भो[7] देवाः !
भो लक्ष्म !
भो विद्वद्वृन्द !
भगो ! नमस्ते
अघो ! याहि

देवा नम्याः
देवा यान्ति
हलि किम् ? देवायिह
अहरहः
अहर्गणः
असुपि किम् ? अहोभ्याम्
अहोरूपम्[10]
'गतमहो रात्रिरेषा'
अहोरात्रः[11]
अहोरथन्तरम्
अहर्पतिः[12]
गीर्पतिः
धूर्पतिः
पुना रमते[13]
हरी रम्यः
शम्भू राजते
अणः किम् ? तृढः, वृढः

१—"हशि च"। २—'रो'रित्युकारानुबन्धग्रहणान्नेह–। ३—"भोभगो अघो-अपूर्वस्य योऽशि"। ४—यद्यपीह यत्वस्याऽसिद्धत्वाद्विसर्गो लभ्यते, तथापि विसर्गस्य स्थानिवद्भावेन रुत्वाद्यत्वं स्यात्। नह्ययमल्विधिः, 'रो'रिति समुदायरूपाश्रयणात्। ५—"व्योर्लघुप्रयत्नतरः शाकटायनस्य" "ओतो गार्ग्यस्य"। ६—"उञि च पदे"। ७—"हलि सर्वेषाम्"। ८—"रोऽसुपि"। ९—"अहन्" इति सूत्रेण रुत्वम्। १०—"रूप-रात्रि-रथन्तरेषु रुत्वं वाच्यम्"। ११—एकदेशविकृतस्याऽनन्यत्वात्-'अहोरात्रः' इति रूपमपि भवति। १२—"अहरादीनां पत्यादिषु वा रेफः"। १३—"रोरि" "ढ्रलोपे पूर्वस्य दीर्घोऽणः"।

| | |
|---|---|
| †लीढः | हलि किम् ? एषोऽत्र |
| ‡अजर्घाः | 'सेमामविड्ढि प्रभृतिं य ईशिषे' |
| मनोरथः | * सैष दाशरथी रामः |
| एष विष्णुः | लोपे चेदिति किम् ? स इत् क्षेति |
| स शम्भुः | 'स एवमुक्त्वा' |
| अकोः किम् ? एषको रुद्रः | [6]तेनेह न–'सोऽहमाजन्मशुद्धानाम्' |
| अनञ्समासे किम् ? असः शिवः | |

* इति स्वादिसन्धिप्रकरणम् *

[ इति सिद्धान्तकौमुदीस्थप्रयोगसूच्यां पञ्चसन्धिप्रकरणं समाप्तम्। ]

## ❀ अथाऽजन्तपुँल्लिङ्गप्रकरणम् ❀

| | |
|---|---|
| समासग्रहणं नियमार्थम् | ङ्याब्ग्रहणं किम् ? |
| तेन–वाक्यस्य न | रामः |

१–पूर्वग्रहणमनुत्तरपदेऽपि पूर्वमात्रस्य दीर्घार्थम्। २–"विप्रतिषेधे परं कार्यम्"। ३–"एतत्तदोः सुलोपोऽकोरनञ्समासे हलि"। ४–"सोऽचि लोपे चेत्पादपूरणम्"। इह ऋक्पाद एव गृह्यते, इति वामनः। ५–अविशेषाच्छ्लोकपादोऽपीत्यपरे। ६–'सत्येवे'त्यवधारणं तु "स्यश्छन्दसि बहुलम्" इति पूर्वसूत्राद्बहुलग्रहणानुवृत्त्या लभ्यते। ७–अत्र नियमाकारश्च–'यत्र सङ्घाते पूर्वो भागः पदं तस्य चेद्भवति तर्हि समासस्यैव'। ८–'राम' शब्दात्प्रातिपदिकसञ्ज्ञायां प्रथमाविभक्तौ सौ रुत्वे विसर्गे च कृते 'रामः' इति रूपं सिद्धम्। नन्वत्र "स्थानिवदादेशोऽन-

† लिहेर्हढत्वे च तकारधत्वे ष्टुत्वेन ढत्वे ढपरे ढलोपे।
कित्वाद्गुणाभाव इकारसत्त्वे ढ्लोपदीर्घेण भवेच्च 'लीढः' ॥ १ ॥

‡ गृधेर्यङ्लोपे लङि सेरिलोपे हल्ङ्यादिलोपे रपरे गुणे च।
भष्भावजश्त्वे च रुरेफलोपे ढ्लोपदीर्घे च भवेद् 'अजर्घाः' ॥ २ ॥

* अत्राऽयं समग्रश्लोकः–'सैष दाशरथी रामः, सैष राजा युधिष्ठिरः।
सैष कर्णो महादानी, सैष भीमो महाबलः ॥'

रामौ[1]

रामाः[2]

नेह[3]–हे कतरत्कुलेति

हे[4] राम ! हे रामौ ! हे रामाः !

ऐङ्ग्रहणं[5] किम् ? हे हरे !

हे विष्णो !

रामम्[6] । रामौ

आङ्ग्रहणं किम् ?

नुम्ग्रहणं किम् ?

रामान्[7]

तदादि-ग्रहणं किमर्थम् ?

विधिरिति किम् ? स्त्री इयती

प्रत्यये किम् ? वव्रश्च

प्रत्ययविशिष्टस्य ततोऽप्यधिकस्य वा माभूत्

रामेण[8]

रामाभ्याम्[9]

रामैः[10]

---

ल्विधौ" "उपदेशेऽजनुनासिक इत्" इति सूत्रद्वयोः दृष्ट्या "ससजुषो रुः" इति सूत्रस्याऽसिद्धत्वेन रेफपदान्तत्वाभावाद्विसर्गो न स्यादिति चेन्न ?, "न मुने" इत्यस्मिन्सुत्रे 'ने'–इति पदं पृथक्कृत्य क्वचिन्त्रिपाद्या असिद्धत्वन्न भवतीति समाधानादिति दिक्। १–'राम' शब्दस्याऽव्युत्पत्तिपक्षे–"अर्थवदधातुरप्रत्ययः प्रातिपदिकम्" इति, व्युत्पत्तिपक्षे–"कृत्तद्धितसमासाश्च" इति प्रातिपदिकसञ्ज्ञायां द्वित्वविवक्षायां 'राम-राम' इति रूपद्वयोपस्थितौ "सरूपाणामेकशेष एकविभक्तौ" इत्येकशेषे कृते प्रथमाया द्विवचने 'औ' विभक्तौ समागतायां "वृद्धिरेचि" इति सूत्रेण वृद्धिं बाधित्वा "प्रथमयोः पूर्वसवर्णः" इति प्राप्तं पूर्वसवर्णदीर्घं प्रबाध्य "नादिचि" इति निषेधे, ततो "वृद्धिरेचि" इति वृद्धौ 'रामौ' इति रूपं सिद्धम् । २–"चुटू" "न विभक्तौ तुस्माः" "अतो गुणे" । 'अतो गुणे' इति हि 'पुरस्तादपवादा अनन्तरान्विधीन्बाधन्ते नोत्तरा'निति न्यायेन 'अकः सवर्णे' इत्यस्यैवाऽयमपवादो न तु 'प्रथमयो'रित्यस्यापि । ३–सम्बुद्ध्याक्षिप्तस्याऽङ्गस्यैङ्ह्रस्वाभ्यां विशेषणात् । ४–"एकवचनं सम्बुद्धिः" "एङ्ह्रस्वात्सम्बुद्धेः" । ५–अत्र हि परत्वान्नित्यत्वाच्च सम्बुद्धिग्रहणे कृते ह्रस्वात्परत्वं नास्ति । ६–"अमि पूर्वः" । ७–"लशक्वतद्धिते" "तस्माच्छसो नः पुंसि" "अट्कुप्वाङ्नुम्व्यवायेऽपि" "पदान्तस्य" । ८–"टाङसिङसामिनात्स्याः" । ९–"सुपि च" । १०–"अतो भिस ऐस्" ।

रामाय[1]
रामाभ्याम् । रामेभ्यः[2]
बहुवचने किम् ? रामः, रामस्य
झलि किम् ? रामाणाम्
सुपि किम् ? पचध्वम्
रामात्[3], रामाद्
रामाभ्याम् । रामेभ्यः
रामस्य[4] । रामयोः[5]
रामाणाम्[6]
[5] रामे । रामयोः

रामेषु[7]
इण्कोः किम् ? रामस्य
आदेशप्रत्यययोः किम् ?—
सुपीः । सुपिसो । सुपिसः
अपदान्तस्य किम् ? हरिस्तत्र
तेन—'परमसर्वत्रे'त्यत्र त्रल्, 'परम-
भवका'नित्यत्राऽकच्च सिद्धयति
सर्वे[8]
सर्वस्मै[9]
सर्वस्मात्,[10] सर्वस्माद् ।

१—"ङेर्यः" । इह स्थानिवद्भावेन यादेशस्य सुप्त्वा'त्सुपि चे'ति दीर्घः । 'सन्निपातलक्षणो विधिरनिमित्तं तद्विघातस्ये'ति परिभाषा तु नेह प्रवर्तते, 'कष्टाय क्रमणे' इत्यादि-निर्देशेन तस्या अनित्यत्वज्ञापनात् । २—"बहुवचने झल्येत्" । ३—"वाऽवसाने" । ४—सस्य द्वित्वपक्षे 'खरि च' इति चर्त्वेऽप्यान्तरतम्यात्सकारस्य सकार एव भवति न तु तकारः, अल्पप्राणप्रयत्नभेदात् । ५—"ओसि च" । ६-"ह्रस्वनद्यापो नुट्" "नामि" । 'सुपि चे'ति दीर्घो यद्यपि परस्तथापीह न प्रवर्तते, सन्निपातपरिभाषाविरोधात् । 'नामी'त्यनेन त्वारम्भसामर्थ्यात्परिभाषा बाध्यते । ७—"आदेशप्रत्यययोः" । ८—"जसः शी" । अनेकाल्त्वात्सर्वादेशः । न चाऽवंगस्तृ इत्यादाविव 'नाऽनुबन्धकृतमनेकाल्त्व'मिति वाच्यं, सर्वादेशत्वा-त्प्रागित्संज्ञाया एवाऽभावात् । ९—"सर्वनाम्नः स्मै" इति 'स्मै' आदेशः । १०—"ङसिङ्योः स्मात्स्मिनौ" । N.N.M.

† 'राम'शब्दस्य सप्तविभक्तिषु प्रयोगनिर्देशप्रकारो यथा—

रामो राजमणिः सदा विजयते रामं रमेशं भजे,
रामेणाऽभिहिता निशाचरचमू रामाय तस्मै नमः ।
रामान्नास्ति परायणं परतरं रामस्य दासोऽस्म्यहम्,
रामे चित्तलयः सदा भवतु मे हे राम ! मामुद्धर ॥१॥

सर्वेषाम्[1]

सर्वस्मिन्—शेषं रामवत्

एवं विश्वादयोऽप्यदन्ताः

उभकौ । 'उभयोऽन्यत्र'

उभयशब्दस्य द्विवचनं नास्तीति

कैयटः

उभये[2] । अन्तरायां पुरि

पूर्वे,[3] पूर्वाः

व्यवस्थायां किम् ? दक्षिणा गाथकाः

असञ्ज्ञायां किम् ? उत्तराः कुरवः ।

स्वे,[4] स्वाः

ज्ञातिधनवाचिनस्तु—स्वाः

अन्तरे[5] अन्तरा वा गृहाः

अन्तरे अन्तरा वा शाटकाः

पूर्वस्मात्,[6] पूर्वात्

पूर्वस्मिन्, पूर्वे

त्वत्कपितृकः[7] । मत्कपितृकः

अतिभवकान्

सर्वो नाम कश्चित्तस्मै—सर्वाय देहि

अतिसर्वाय देहि

अतिकतरं कुलम् । अतितत्

मासपूर्वाय

---

१—"आमि सर्वनाम्नः सुट्" । २—'उभय'शब्दाज्जस्ययजादेशस्य स्थानिवद्भावेन तयप्प्रत्ययान्ततया 'प्रथमचरमे'ति विकल्पे प्राप्ते विभक्तिनिरपेक्षत्वेनाऽन्तरङ्गत्वान्नित्यैव सञ्ज्ञा भवति । ३—"पूर्वपरावरदक्षिणोत्तरापराधराणि व्यवस्थायामसञ्ज्ञायाम्" । ४—"स्वमज्ञातिधनाख्यायाम्" । ५—"अन्तरं बहिर्योगोपसंव्यानयोः" । ६—"पूर्वादिभ्यो नवभ्यो वा" । ७—"न बहुव्रीहौ" । त्वकं पिता यस्य स त्वत्कपितृकः । अहकं पिता यस्य स मत्कपितृकः । इह समासात्प्रागेव प्रक्रियावाक्ये सर्वनामसञ्ज्ञा निषिध्यते । अन्यथा लौकिके विग्रहवाक्ये इव तत्राऽप्यकच्प्रवर्तेत । स च समासेऽपि श्रूयेत । अतिक्रान्तो भवकन्तमतिभवकानितिवत् । भाष्यकारस्तु 'त्वत्कपितृको' 'मत्कपितृक' इति रूपे इष्टापत्तिं कृत्वैतत्सूत्रं प्रत्याचख्यौ । यथोत्तरं मुनीनां प्रामाण्यम् । ८—सञ्ज्ञोपसर्जनीभूतास्तु न सर्वादयः । महासञ्ज्ञाकरणेन तदनुगुणानामेव गणे सन्निवेशात् । अतः सञ्ज्ञाकार्यमन्तर्गणकार्यं च तेषां न भवति । ९—"तृतीयासमासे" ।

इहापि न–मासेन पूर्वाय
[१]वर्णाश्रमेतराणाम्
[२]वर्णाश्रमेतरे, वर्णाश्रमेतराः
वर्णाश्रमेतरकाः
[३]प्रथमे, प्रथमाः
द्वितये, द्वितयाः
नेमे, नेमाः
द्वितीय[४]स्मै, द्वितीयायेत्यादि
एवं तृतीयः
अर्थवद्ग्रहणान्नेह–पटुजातीयाय
निर्जरः। निर्जर[५]सौ
निर्जरसः

निर्जरसा
निर्जरसे
निर्जरसः
पक्षे हलादौ च रामवत्
निर्जर[६]सा, निर्जरस इति केचिद्
निर्जरसैः, निर्जरस्येत्यादि
पादः। पादौ। पादाः
पादम्। पादौ। प[७]दः–पादान्
पदा–पादेनेत्यादि
[८]दतः
दता
दद्भ्याम्–इत्यादि

---

१–"द्वन्द्वे च"। समुदायस्याऽयं निषेधो न त्ववयवानाम्। न चैवं तदन्तविधिना सुट्प्रसङ्गः, 'सर्वनाम्नो विहितस्याऽऽमः सु'डिति व्याख्यातत्वात्। २–"विभाषा जसि"। ३–"प्रथम-चरम-तया-ऽल्पार्ध-कतिपय-नेमाश्च"। ४–"विभाषाप्रकरणे तीयस्य ङित्सूपसङ्ख्यानम्"। ५–"जराया जरसन्यतरस्याम्" 'पदाङ्गाधिकारे तस्य च तदन्तस्य च' 'निर्दिश्यमानस्यादेशा भवन्ति'। ६–वृत्तिकृता तु–पूर्वविप्रतिषेधेनेनाऽऽतोः कृतयोः सन्निपातपरिभाषाया अनित्यत्वं [ च ] आश्रित्य जरसि कृते 'निर्जरसिन' 'निर्जरसा'दिति रूपे, न तु 'निर्जरसा' 'निर्जरस' इति केचिदित्युक्तम्। तथा भिसि 'निर्जरसै' रिति रूपान्तरमुक्तम्। तदनुसारिभिश्च षष्ठ्येकवचने 'निर्जरस्ये'त्येव रूपं स्वीकृतम्। एतच्च भाष्यविरुद्धम्। ७–"पद्दन्नोमास्हृन्निशसन्यूषन्दोषन्यकञ्छकन्नुदन्नासञ्छस्प्रभृतिषु" इति पदादेशः। ८–"सुडनपुंसकस्य" "स्वादिष्वसर्वनामस्थाने" "यचि भम्" "आकडारादेका सञ्ज्ञा"।

मासः
मासा
माभ्याम्
माभिः
यूष्णः[1] । यूष्णा
यूषभ्याम्[2] । यूषभिः । यूषभ्यः
यूष्णि[3], यूषणि
'पदन्ने'ति सूत्रे प्रभृतिग्रहणं प्रकारार्थम्
तथा च भाष्ये 'ककुद्दोषिणी'-
इत्युदाहृतः
तेन 'पदङ्घ्रिश्चरणोऽस्त्रियाम्'
'स्वान्तं हृन्मानसं मन'इत्यादि
सङ्गच्छते,
'आसन्यं प्राणमूचु'रिति च
आसन्यः । तेन† 'दक्षिणं दोर्नि-
शाचर' इति सङ्गच्छते
'भुजबाहू प्रवेष्टो दो'रिति साह-
चर्य्यात्पुंस्त्वमपि
+'दोषं तस्य तथाविधस्य भजत'इति
द्व्यह्नः
द्व्यह्नि[4], द्व्यहनि
द्व्यह्ने
व्यह्नि, व्यहनि
व्यह्ने
अह्नः सायः—सायाह्नः
सायाह्नि, सायाहनि
सायाह्ने
विश्वपाः । विश्वपौ[5]
विश्वपाः[6]
तथापि—'गौर्यौ' 'गौर्य' इत्यादि

१—"अल्लोपोऽनः" "रषाभ्यां नो णः समानपदे । 'पूर्वस्मादपि विधौ स्थानिवद्भाव' इति पक्षे त्वड्व्यवाय इत्येवाऽत्र णत्वम् । पूर्वत्रासिद्धे न स्थानिवदिति तु इह नास्ति, तस्य दोषः 'संयोगादि-लोप-लत्व-णत्वेष्वि'ति निषेधात् । २—"नलोपः प्रातिपदिकान्तस्य" । ३—"विभाषा ङिश्योः" । ४—"सङ्ख्याविसायपूर्वस्याह्नस्याऽहनन्यतरस्यां ङौ" । ५—"दीर्घाज्जसि च" । ६—यद्यपीह औङि 'नादिची' त्येव सिद्धं, जसि तु सत्यपि पूर्वसवर्णदीर्घे क्षतिर्नास्ति, तथापि 'गौर्यौ' 'गौर्य' इत्याद्यर्थं सूत्रमिहापि न्याय्यत्वादुपन्यस्तम् ।

† 'तमुपाद्रवदुद्यम्य दक्षिणं दोर्निशाचरः' इति रघुवंशे ।
+ 'दोषं तस्य तथाविधस्य भजतश्चापस्य गृह्णन् गुण' मिति श्रीहर्षः ।

विश्वपः[1]
विश्वपा । विश्वपाभ्यामित्यादि
एवं शङ्खध्मादयः
धातोः किम् ? हाहान्
हाहा[2]
हाहै
हाहाः
हाहौः
हाहे
क्त्वः[3] । श्वः
हरिः । हरी । हरयः[4]
हे[5] हरे !
हरिम् । हरी । हरीन्
शेषः किम् ? मत्यै
ह्रस्वौ किम् ? वातप्रम्ये
इदुतौ किम् ? मात्रे
हरिणा[6]
अस्त्रियां किम् ? मत्या

हरये[7]
घेः किम् ? सख्ये
ङिति किम् ? हरिभ्याम्
सुपि किम् ? पट्वी
हरेः[8]
हर्य्योः । हरीणाम्
हरौ[9]
हर्योः । हरिषु
हल्ङ्याब्भ्यः किम् ? ग्रामणीः
दीर्घात्किम् ? निष्कौशाम्बिः
अतिखट्वः
सु-ति-सीति किम् ? अभैत्सीत्
अपृक्तमिति किम् ? बिभर्ति
हल् किम् ? बिभेद
प्रथमहल् किम् ? राजा
सखा[10]
हे सखे !
सखायौ[11] । सखायः
सखायम् । सखायौ । सखीन्

१–"आतो धातोः" । २–"अकः सवर्णे दीर्घः" । ३–'आत' इति योगविभागादधातोरप्याकारलोपः क्वचित् । ४–"जसि च" । ५–"ह्रस्वस्य गुणः" 'एङ्ह्रस्वा'दिति सम्बुद्धिलोपः । ६–"शेषो घ्यसखि" "आङो नाऽस्त्रियाम्" । ७–"घेर्ङिति" । ८–"ङसिङसोश्च" । ९–"अच्च घेः" । १०-"अनङ् सौ" "अलोऽन्त्यात्पूर्व उपधा" "सर्वनामस्थाने चाऽसम्बुद्धौ" "अपृक्त एकाऽल्प्रत्ययः" "हल्ङ्याब्भ्यो दीर्घात्सुतिस्यपृक्तं हल्" । ११–"सख्युरसम्बुद्धौ" "अचो ञ्णिति" ।

सख्या । सख्ये
सख्युः[1]
सख्यौ[2]
शोभनः सखा—सुसखा
सुसखायौ । सुसखायः
सुसखिना[3] । सुसखये
सुसखेः २
सुसखौ—इत्यादि
अतिशयितः सखा-अतिसखा
परमः सखा यस्येति-परमसखा
परमसखायौ—इत्यादि
सखीमतिक्रान्तः[4]—अतिसखिः
पत्या[5]
पत्ये
पत्युः २ । पत्यौ । शेषं हरीवत्
समासे तु—भूपतिना
भूपतये
कति[6] । कति
कतिभिः । कतिभ्यः । कतिभ्यः
कतीनाम् । कतिषु
त्रयः । त्रीन्
त्रिभिः । त्रिभ्यः २
त्रयाणाम्[7]
परमत्रयाणाम्
गौणत्वे तु नेति केचित्—
प्रियत्रीणाम्
वस्तुतस्तु-प्रियत्रयाणाम्
त्रिषु
द्वौ[8] । द्वौ
द्वाभ्याम् ३ । द्वयोः २
द्विपर्यन्तानां किम् ? भवान्
भवन्तौ । भवन्तः
द्विर्नाम कश्चित्—द्विः । द्वी
द्वावतिक्रान्तः—अतिद्विः
प्राधान्ये तु—परमद्वौ
औडुलोमिः । औडुलोमी

---

१—"ख्यत्यात्परस्य" । २—"औत्" । ३—अनङ्-णिद्वद्भावयोराङ्गत्वात्तदन्तेऽपि प्रवृत्तिः । समुदायस्य सखिरूपत्वाभावादसखीति निषेधाऽप्रवृत्तेर्घिसञ्ज्ञा । ४-लिङ्गविशिष्टपरिभाषाया अनित्यत्वान्न टच् । इहाऽनङ्णित्त्वे न भवतः । 'गोस्त्रियोः' इति ह्रस्वेन सखिशब्दस्य लाक्षणिकत्वात् । लक्षणप्रतिपदोक्तयोः प्रतिपदोक्तस्यैव ग्रहणात् । ५—"पतिः समास एव" । ६—"बहु-गण-वतु-डति सङ्ख्या" "डति च" "प्रत्ययस्य लुक्-श्लु-लुपः" "षड्भ्यो लुक्" "प्रत्ययलोपे प्रत्ययलक्षणम्" "न लुमताऽङ्गस्य" । ७—"त्रेस्त्रयः" । ८—त्यदादीनामः" 'द्विपर्यन्तानामेवेष्टिः' ।

उ[1]डुलोमाः
औडुलोमिम् । औडुलोमी
उडुलोमान्
वातं प्रमिमीते—वातप्रमीः
वातप्रम्यौ
वातप्रम्यः
हे वातप्रमीः !
वातप्रमीम्
वातप्रम्यौ । वातप्रमीन्
वातप्रम्या । वातप्रमीभ्याम् ३
वातप्रम्ये । वातप्रम्यः २
वातप्रम्योः २ । वा[2]तप्रम्याम्
वा[3]तप्रमी
वातप्रम्योः । वातप्रमीषु
एवं ययी-पप्यादयः
ययी-मार्गः
पपीः-सूर्यः
वा[4]तप्रम्यम् । वातप्रम्यः
प्रातप्रम्यि
बहुश्रेयसी

हे[5] बहुश्रेयसि !
बहुश्रेयसीन्
ब[6]हुश्रेयस्यै
बहुश्रेयस्याः २
बहुश्रेयसीनाम्
ब[7]हुश्रेयस्याम्
अतिलक्ष्मीः
कुमारी
कु[8]मार्यौ । कुमार्यः
हे कुमारि !
कुमारीम् । कुमारीः
कुमार्यै
कुमार्याः २
कुमारीणाम्
कुमार्याम्
प्रधीः । प्रध्यौ । प्रध्यः
प्रध्यम् । प्रध्यः
उन्नीः उन्न्यौ । उन्न्यः
हे उन्नीः !
उन्न्यम्

---

१—"लोम्नोऽपत्येषु बहुष्वकारो वक्तव्यः" । २—दीर्घत्वान्न नुट् । ३—"अकः सवर्णे दीर्घः" । ४—क्विबन्त—'वातप्रमी' शब्दस्य तु अमि शसि ङौ च विशेषः । ५—"यू स्त्र्याख्यौ नदी" 'प्रथमलिङ्गग्रहणं च' "अम्बार्थनद्योर्ह्रस्वः" । ६-"आण्नद्याः" "आटश्च" ७—"ङेराम्नद्याम्नीभ्यः" । इह परत्वादाटा नुड् बाध्यते । ८—"अचि श्नुधातुभ्रुवां य्वोरियङुवङौ" इत्यनेनेयङि प्राप्ते "एरनेकाचोऽसंयोगपूर्वस्य" इति सूत्रेण यण् ।

उन्न्याम्
एवं ग्रामणीः
अनेकाचः किम् ? नीः
नियौ । नियः
नियम् । नियः
नियाम्
असंयोगपूर्वस्य किम् ? सुश्रियौ
यव...
शुद्ध[1]धियौ । परमधियौ
कथं[2] तर्हि 'दुधियौ' 'वृश्चिक-
भियौ'त्यादि ?
सुधियौ[3] । सुधियः—इत्यादि
सखीयतीति—सखा[4]
सखायौ । सखायः । हे सखीः !
सखायम् । सखायौ
सख्यः
सखमिच्छतीति—सखीः

सुखमिच्छतीति—सुखीः
सुतमिच्छतीति—सुतीः
सख्यौ
सुख्यौ
सुत्यौ
सख्युः । सुख्युः । सुत्युः
लुनीः । क्षामीः । प्रस्तीमीः
लून्युः । क्षाम्युः । प्रस्तीम्युः
शुष्कीः । शुष्कियौ । शुष्कियः
शुष्कियः—इत्यादि
शम्भुर्हरिवत्
एवं विष्णु-वायु-भान्वादयः
नप्त्रादिग्रहणं[5] नियमार्थम्
क्रोष्टा[6] । क्रोष्टारौ । क्रोष्टारः
क्रोष्टारम् । क्रोष्टारौ
क्रोष्टून्
क्रोष्ट्रूँ[7]

१-'गतिकारकेतरपूर्वपदस्य यण्नेष्यते' । २-उच्यते-दुःस्थिता धीर्येषामि[illegible] विग्रहे 'दु'रित्यस्य धीशब्दं प्रति गतित्वमेव नास्ति । यत्क्रियायुक्ताः प्रादयस्तं प्र[illegible] गत्युपसर्गसञ्ज्ञाः । वृश्चिकशब्दस्य बुद्धिकृतमपादानत्वं नेह विवक्षितम् । वृश्चि[illegible] सम्बन्धिनी भीर्वृश्चिकभीरित्युत्तरपदलोपो वा । ३-"न भू-सुधियोः" । ४-[illegible] पस्य स्थानिवत्त्वाद्यणि प्राप्ते-'क्वौ लुप्तं न स्थानिवत्' । ५-'उणादि निष्पन्ना[illegible] तृन्-तृच्-प्रत्ययान्तानां सञ्ज्ञाशब्दानामुपधादीर्घश्चेत्तर्हि नप्त्रादीनामेवे'ति नियमा[illegible] कारः । ६-"तृज्वत्क्रोष्टुः" "ऋतो ङि सर्वनामस्थानयोः" "ऋदुशनस्पुरुदंसो[illegible] हसां च" "अप्तृन्तृच्-स्वसृ-नप्तृ-नेष्टृ-त्वष्टृ-क्षत्तृ-होतृ-पोतृ-प्रशास्तॄणाम्" ७-"विभाषा तृतीयादिष्वचि" ।

क्रोष्ट्रे
क्रोष्टुः २
क्रोष्टूनाम्
क्रोष्टरि । क्रोष्ट्रोः
पक्षे हलादौ च शम्भुवत्
हूहूः । हूह्वौ । हूह्वः
हूहूम् । हूह्वौ । हूहून्—इत्यादि
हे अतिचमु !
अतिचम्वै
अतिचम्वाः २ । अतिचमूनाम्
अतिचम्वाम्
खलपूः
[3]खलप्वौ । खलप्वः- इत्यादि
एवं सुल्वादयः
अनेकाचः किम् ? लूः
लुवौ । लुवः
धात्ववयवेति किम् ? उल्लूः
उल्ल्वौ । उल्ल्वः
असंयोगपूर्वस्य किम् ? कटप्रुवौ
कटप्रुवः

गतीत्यादि किम् ? परमलुवौ
सुपि किम् ? लुलुवतुः
स्वभूः । स्वभुवौ । स्वभुवः
[4]वर्षाभ्वौ । वर्षाभ्वः
दृम्भतीति—
दृम्भूः । दृम्भ्वौ । दृम्भ्वः
दृम्भूम् । दृम्भ्वौ । दृम्भून्
शेषं हूहूवत्
दृन्भूः
[5]दृन्भ्वौ । दृन्भ्वः—इत्यादि
करभ्वौ । करभ्वः
कारभ्वौ
कारभ्वः
पुनर्भ्वावित्यादि
धाता । हे धातः !
धातारौ । धातारः
[6]धातृणाम्—इत्यादि
एवं नप्त्रादयः
उद्गातारौ
पिता । पितरौ । पितरः

१—"ऋत उत्" "रात्सस्य" । २—'नुमचिरतृज्वद्भावेभ्यो नुट् पूर्वविप्रतिषेधेन' ३—"ओः सुपि" "गतिकारकेतरपूर्वपदस्य यण्नेष्यते" । ४—"वर्षाभ्वश्च" । ५—"दृन्करपुनःपूर्वस्य भुवो यण्वक्तव्यः" इति यण् । ६—"ऋवर्णान्नस्य णत्वं वाच्यम् । ७—व्युत्पत्तिपक्षे नप्त्रादिग्रहणस्य नियमार्थत्वान्न दीर्घः ।

पितरम् । पितरौ
शेषं धातृवत्
एवं जामातृ-भ्रात्रादयः
ना[1] । नरौ । नरः
हे नः !
नणाम्, नृणाम्
[2]कीः । किरौ । किरः
तीः । तिरौ । तिरः—इत्यादि गीर्वत्
कृः । क्रौ । क्रः
कृम् । क्रौ । कृन्
क्रा । क्रे—इत्यादि
गमा । शका
गमलौ । गमलः
गमलम् । गमलौ,
गमृन्
गम्ला
गम्ले
गमुल् । शकुल्—इत्यादि

सेः । सयौ । सयः
स्मृतेः । स्मृतयौ । स्मृतयः
गौः[2] । गावौ । गावः
नेह—अचिनवम् । असुनवम्
गाम्[3] । गावौ । गाः
गवा । गवे
गोः—इत्यादि
सुद्यौः[4] । सुद्यावौ । सुद्यावः
नेह[5]—हे भानो !, हे भानवः !
स्मृतौः । स्मृतावौ
स्मृतावः
स्मृताम् । स्मृतावौ
स्मृताः—इत्यादि
[6]राः । रायौ । रायः
रायम् । रायौ । रायः
राया । राभ्यामित्यादि
ग्लौः । ग्लावौ । ग्लावः
ग्लावम् । ग्लावौ । ग्लावः—इत्यादि

* इत्यजन्तपुँल्लिङ्गप्रकरणम् *

—*—

१—"नृ च" इति वैकल्पिके दीर्घः । २—"गोतो णित्" । ३—"औतोऽम्शसोः" । ४—"ओतो णिदिति वाच्यम्" "विहितविशेषणं च" । ५—"ओकारान्ताद्विहितं सर्वनामस्थान"मिति व्याख्यानान्नेह । ६—"रायो हलि" ।

## ❀ अथाऽजन्तस्त्रीलिङ्गप्रकरणम् ❀

रमा। [1]रमे। रमाः
हे [2]रमे! हे रमे! हे रमाः!
रमाम्। रमे। रमाः
[3]रमया। रमाभ्याम्। रमाभिः
[4]रमायै
रमायाः २। रमयोः। रमाणाम्
रमायाम्। रमयोः। रमासु
[5]सर्वस्यै। सर्वस्याः २
सर्वासाम्
सर्वस्याम्। सर्वयोः। सर्वासु
एवं विश्वादय आबन्ताः
[6]उत्तरपूर्वस्यै, उत्तरपूर्वायै
उत्तरपूर्वायै
अन्तरस्यै शालायै
अन्तरायै नगर्यै
[8]द्वितीयस्यै, द्वितीयायै
द्वितीयस्याः, द्वितीयायाः
द्वितीयस्याम्, द्वितीयायाम्
शेषं रमावत्। एवं तृतीया
हे[9] अम्ब! हे अक्क!
हे अल्ल! हे[10] अम्बाडे!
हे अम्बाले! हे अम्बिके!
जरा। जरसौ
जरसाम्—इत्यादि
पक्षे हलादौ च रमावत
'जरसी'[11] इति केचित

१—"औङ आपः"। २—"सम्बुद्धौ च"। "एङ्ह्रस्वादि'ति सम्बुद्धिलोपः। ३—"आङि चापः"। ४—"याडापः" "वृद्धिरेचि"। ५—"सर्वनाम्नः स्याड्ढ्रस्वश्च"। ६—"विभाषा दिक्समासे बहुव्रीहौ"। ७—'दिङ्नामान्यन्तराले' इति प्रतिपदोक्तस्य दिक्समासस्य ग्रहणान्नेह—योत्तरा सा पूर्वा यस्या उन्मुग्धायास्तस्यै। ८—"विभाषा द्वितीया-तृतीयाभ्याम्"। इदं सूत्रं त्यक्तुं योग्यम्। तीयस्य ङित्सूपसङ्ख्यानात्। ९—"अम्बार्थनद्योर्ह्रस्वः"। १०—"असंयुक्ता ये डलकास्तद्वतां ह्रस्वो न"। ११—इह पूर्वविप्रतिषेधेन शीभावं कृत्वा सन्निपातपरिभाषाया अनित्यतां चाऽऽश्रित्य 'जरसी' इति केचिदाहुस्तन्निर्मूलम्। यद्यपि जरसादेशस्य स्थानिवद्भावेनाऽऽबन्ततामाश्रित्य—'औङ आपः' 'आङि चापः' 'याडापः' 'ह्रस्वनद्यापः' 'ङेराम्' मिति पञ्चापि विषयः प्राप्ताः। एवं नस्-निश्-पृत्सु। तथाऽप्यनल्विधावित्युक्तेर्न भवति। 'आ-आ'बिति प्रश्लिष्य आकाररूपस्यैवाऽऽपः सर्वत्र ग्रहणात्।

अतिखट्वः[1] 'निष्कौशाम्बि'रित्यादि

अतिखट्वाय

नसः । नसा । नोभ्यामित्यादि

निशः । निशा

निड्भ्याम्[2] । निड्भिः

निट्त्सु[3], निट्सु

निज्भ्याम्[4] । निज्भिः

निच्शु, निच्छु

पृतः[5] । पृता

पृद्भ्याम्

गोपा विश्वपावत्

मतिः

मतीः

मत्या

मत्यै[6], मतये

मत्याः २, मतेः २

मत्याम्[7], मतौ

एवं श्रुति-स्मृत्यादयः

तिस्रः[8] । तिस्रः

तिसृणाम्[9]

तिसृषु

प्रियत्रिः[10]—मतिवत्

आमि तु—'प्रियत्रयाणा'मिति

प्रियतिसा[11] । प्रियतिसौ

प्रियतिसृः

प्रियतिसृमित्यादि

---

१—एवं हल्ङ्यादिसूत्रेऽपि 'आ-आप्' 'ङी—ई' इति प्रश्लेषादतिखट्वो निष्कौशाम्बिरित्यादि—सिद्धेर्दीर्घग्रहणं प्रत्याख्येयम् । न चैवमप्यतिखट्वायेत्यत्र स्था श्रयमाकारत्वं स्थानिवद्भावेनाऽऽप्त्वं चाऽऽश्रित्य याट् स्यादिति वाच्यम्, आब यदङ्गं ततः परस्य याड्विधानात् । उपसर्जनस्त्रीप्रत्यये तदादि-नियमाद २—"व्रश्च-भ्रस्ज सृज-मृज-यज-राज भ्राज -च्छशां षः" इति शस्य षत्वे, षस्य जश्त्वे डकारे च कृते रूपमिदम् । ३—"षढोः कः सि" इति सूत्रं तु नेह प्रवर्तते, जश्त्व प्रत्यसिद्धत्वात् । ४—केचित्तु व्रश्चादिसूत्रे 'दादेर्धातोः' इति सूत्राद्धातोरित्यनुव यन्ति । तन्मते जश्त्वेन जकारे । ५—"मास-पृतना-सानूनां मांस्पृत्स्नवो वाच्या शसादौ वा" । ६—"ङिति ह्रस्वश्च" "आण्नद्याः" । ७—इदुद्भ्याम्" । ८—"त्रिच तुरोः स्त्रियां तिसृ-चतसृ" "अचि र ऋतः" । ९—"न तिसृ-चतसृ" १०—'स्त्रिया'मिति त्रिचतुरोर्विशेषणान्नेह—प्रियास्त्रयस्त्रीणि वा यस्याः सा ११—प्रियास्तिस्रो यस्य स इति विग्रहे ।

प्रियत्रि[1] कुलम्
प्रियतिसृ[2] । प्रियतिसृणी[3]
प्रियतिसृणि
प्रियतिसृ[4], प्रियतिसृणा-इत्यादि
द्वे २ । द्वाभ्याम् ३ । द्वयोः २
गौरी । गौर्यौ । गौर्यः
हे गौरि !
गौर्यै[5]–इत्यादि
एवं वाणी-नद्यादयः
सखी[5] । सख्यौ
सख्यः–इत्यादि गौरीवत्
लक्ष्मीः[6] । शेषं गौरीवत्
एवं तरी-तन्त्र्यादयः
स्त्री । हे स्त्रि !
स्त्रियौ[7] । स्त्रियः
स्त्रियम्[8], स्त्रीम्
स्त्रियौ । स्त्रियः, स्त्रीः
स्त्रिया । स्त्रियै
स्त्रियाः २ । स्त्रियोः २
स्त्रीणाम्
स्त्रियाम् । स्त्रीषु
[9]अतिस्त्रिः । अतिस्त्रियौ
× [10]अतिस्त्रयः
हे अतिस्त्रे ! हे अतिस्त्रियौ !
हे अतिस्त्रयः !
अतिस्त्रियम्,[11] अतिस्त्रिम्
अतिस्त्रियौ

१–प्रियास्तिस्रो यस्य तत्कुलम् । स्वमोर्लुका लुप्तत्वेन प्रत्ययलक्षणाभावान्न तिस्रादेशः । २–'न लुमते'ति निषेधस्याऽनित्यत्वपक्षे 'प्रियतिसृ' इति रूपं भवति । ३–"रादेशात्पूर्वविप्रतिषेधेन नुम्" । ४–अत्र वक्ष्यमाणपुंवद्भावविकल्पात्पर्यायेण नुम्प्रभावौ । ५–अत्र प्रातिपदिकग्रहणे लिङ्गविशिष्टस्यापि ग्रहणादनङि णिद्वद्भावे च प्राप्ते परत्त्व "विभक्तौ लिङ्गविशिष्टाऽग्रहणम्" इति परिभाषया निषेधे, ततो ङ्यन्तत्वात्सुलोपः । ६–अत्राऽङ्यन्तत्वात् हल्ङ्यादिना न सुलोपः । तथा चोक्तम्–'अवी तन्त्री-तरी-लक्ष्मी ध्री-ह्री-श्रीणामुदाहृतः । सप्तानामपि शब्दानां सुलोपो न कदाचन ।' ७–"स्त्रियाः" । ८–"वाऽम्शसोः" । ९–स्त्रियमतिक्रान्तोऽतिस्त्रिरिति विग्रहः । १०–"जसि" । ११–"वाऽम्शसोः" ।

× 'गुणनाभावीत्वनुड्भिः परत्वात्पुंसि बाध्यते ।
क्लीबे नुमा च स्त्रीशब्दस्येयङित्यवधार्यताम् ॥'

अतिस्त्रियः—अतिस्त्रीन्
अतिस्त्रिणा
अ[1]तिस्त्रये
अतिस्त्रेः २
* अतिस्त्रियोः २
अतिस्त्रीणाम्
अ[2]तिस्त्रौ
अतिस्त्रि । अतिस्त्रिणी
अतिस्त्रीणि
अतिस्त्रिणा
अतिस्त्रिणे
अ[3]तिस्त्रये
अतिस्त्रिणः २ । अतिस्त्रेः २
अतिस्त्रिणोः २
अतिस्त्रियोरित्यादि
शसि—अतिस्त्रीः

अतिस्त्रिया
अ[4]तिस्त्रियै, अतिस्त्रये
अतिस्त्रियाः २, अतिस्त्रेः २
अतिस्त्रीणाम्
अतिस्त्रियाम्, अतिस्त्रौ
श्रीः । श्रियौ । श्रियः
हे[5] श्रीः !
श्रियै, श्रिये
श्रियाः २, श्रियः
श्री[6]णाम्, श्रियाम्
श्रियि, श्रियाम्
प्र[7]धीः । प्रध्यम् । प्रध्यः
वृत्तिकारमते—सुधीः श्रीवत्
मतान्तरे तु पुंवत्
सुष्ठु धीरिति—सुधीः श्रीवदेव
धेनुर्मतिवत्

१—"घेर्ङिति" । २—"अच्च घेः" ३—ङेप्रभृतावजादौ वक्ष्यमाणपुंवद्भावात् प्राग्वद्रूपम् । ४—'ङिति ह्रस्वश्चे'ति ह्रस्वान्तत्वप्रयुक्तो विकल्पः । 'अस्त्री'ति इयङुवङ्स्थानावित्यस्यैव पर्युदासः । तत्सम्बद्धस्यैवानुवृत्तेर्दीर्घस्याऽयं निषेधो न ह्रस्वस्य । ५—"नेयङुवङ्स्थानावस्त्री ।" ६—"वाऽऽमि" । ७—प्रधीशब्दस्य वृत्तिकारादीनां मते लक्ष्मीवद्रूपम् । 'पदान्तरं विनाऽपि स्त्रियां वर्तमानत्वं नित्यस्त्रीत्व'मिति स्वीकारात् । 'लिङ्गान्तरानभिधायकत्वं त'—दिति कैयटमते तु पुंवद्रूपम् । 'प्रकृष्टा धी'रिति विग्रहे तु लक्ष्मीवत् ।

* ओस्यौकारे च नित्यं स्यादम्-शसोस्तु विभाषया ।
इयादेशोऽचि नाऽन्यत्र स्त्रियाः पुंस्युपसर्जने ॥ इति ॥

[1]क्रोष्ट्री । क्रोष्ट्र्यौ । क्रोष्ट्र्यः
'वधू' गौरीवत् । 'भ्रूः'—श्रीवत्
हे सुभ्रूः !
कथं तर्हि—'हा पितः क्वासि
हे 'सुभ्रु' इति भट्टिः ?
प्रमाद एवाऽयमिति बहवः ।
खलपूः—पुंवत्
पुनर्भूः । हे पुनर्भु !
पुनर्भ्वम् । पुनर्भ्वौ । पुनर्भ्वः
[2]पुनर्भूणाम् । वर्षाभूः
कैयटमते—हे वर्षाभूः !
मतान्तरे तु—हे वर्षाभु !
[3]पुनर्नवायां तु—हे वर्षाभु !
[4]वर्षाभ्वौ । वर्षाभ्वः
स्वयम्भूः—पुंवत्
*[5]स्वसा । स्वसारौ । स्वसारः
माता—पितृवत्
शसि—मातॄः
द्यौर्गोवत्[6]
राः—पुंवत् । नौर्ग्लौवत्

❀ इत्यजन्तस्त्रीलिङ्गप्रकरणम् ❀

—०※०—

## ❀ अथाऽजन्तनपुंसकलिङ्गप्रकरणम् ❀

[7]ज्ञानम् । हे ज्ञान ! | [8]ज्ञाने । ज्ञानानि

१—"स्त्रियां च" "ऋन्नेभ्यो ङीप्" । २—"एकाजुत्तरपदे णः" । ३—'भेक्यां पुनर्नवायां स्त्री वर्षाभूर्दर्दुरे पुमा' निति यादवः । ४—"वर्षाभ्वश्च" । ५—"न षट्स्वस्रादिभ्यः" । 'अप्तृ'न्निति दीर्घः । ६—"अतोऽम्" "अमि पूर्वः" । ७—अत्र "नपुंसकाच्च" इति औङः श्यादेशेऽनुबन्धलोपे, ततो भसञ्ज्ञायां "यस्येति च" इत्यनेनाकारलोपे प्राप्ते "औङः श्यां प्रतिषेधो वाच्यः" इति निषेधे, गुणे च कृते रूपमिदं सिद्धम् । ८—"जश्शसोः शिः" "शि सर्वनामस्थानम्" "नपुंसकस्य झलचः" ।

* के स्वस्रादय इत्याशङ्कायामाह—
'स्वसा तिस्रश्चतस्रश्च ननान्दा दुहिता तथा ।
याता मातेति सप्तैते स्वस्रादय उदाहृताः ॥"

शेषं रामवत्
एवं धन वन-फलादयः
[1]कतरत्, कतरद्
कतरे । कतराणि
भस्येति किम् ? पञ्चमः
हे कतरत् । शेषं पुंवत्
कतमत् । अन्यत्
अन्यतरत् । इतरत्
अन्यतमम्
[2]ऐकतरम्—ज्ञानवत्
अजरम् । अजरसी, अजरे
[3]अजरांसि, अजराणि
अजरसम्, अजरम्
अजरसी, अजरे
अजरांसि, अजराणि
शेषं पुंवत्

हृन्दि । हृदा
हृद्भ्यामित्यादि
उदानि । उद्ना
उद्भ्यामित्यादि
आसानि
आस्ना । आसभ्यामित्यादि
मांसि
मांसा । मान्भ्यामित्यादि
'[4]मांस्पचन्या उखायाः' इति
श्रीपम्—ज्ञानवत् । [5]श्रीपाय
[6]वारि । [7]वारिणी । वारीणि
हे वारे !, हे वारि !
वारिणा । [8]वारिणे
वारिणः २ । वारिणोः
वारीणाम्
वारिणि । वारिणोः

१—"भद्भुतरादिभ्यः पञ्चभ्यः" "टेः" "वाऽवसाने" । २—"एकतरात्प्रतिषेधो वक्तव्यः" । ३—"सान्तमहतः संयोगस्य" । ४—वस्तुतस्तु—'प्रभृति'ग्रहणं प्रकारार्थमित्युक्तम् । अत एव भाष्ये 'मांस्पचन्या उखाया' इत्युदाहृतम् । अयस्मयादित्वेन भत्वात्संयोगान्तलोपो न । 'पदन्न'इत्यत्र हि 'छन्दसी' त्यनुवर्तिते वृत्तौ, तथापि 'अधो भी'त्यत्र 'मासश्छन्दसी'ति वार्तिके छन्दोग्रहणसामर्थ्याल्लोकेऽपि क्वचिदिति कैयटोक्तरीत्या प्रयोगमनुसृत्य पदादयः प्रयोक्तव्या इति बोध्यम् । ५—"ह्रस्वो नपुंसके प्रातिपदिकस्य" । अत्र सन्निपातपरिभाषया 'आतो धातो' रित्याकारलोपो न । ६—"स्वमोर्नपुंसकात्" । ७—"इकोऽचि विभक्तौ" । ८—'घेर्ङिती'ति गुणे प्राप्ते—"वृद्ध्यौत्व—तृज्वद्भाव—गुणेभ्यो नुम्पूर्वविप्रतिषेधेन" ।

हलादौ हरिवत्

अनादये, अनादिने-इत्यादि

शेषं वारिवत्

*पीलुने

दध्ना

दध्ने

दध्नः । दध्नोः २

दध्नि, दधनि

शेषं वारिवत्

एवमस्थि-सक्थ्यक्षि

अतिदध्ना

सुधि । सुधिनी । सुधीनि

हे सुधे !, हे सुधि !

सुधिया, सुधिना

सुधियां-सुधीनाम्

प्रध्या, प्रधिना

मधु । मधुनी । मधूनि

हे मधो !, हे मधु !

एवमम्ब्वादयः

स्नूनि, सानूनि

प्रियक्रोष्टु । प्रियक्रोष्टुनी

प्रियक्रोष्टूनि

प्रियक्रोष्ट्रा, प्रियक्रोष्टुना

प्रियक्रोष्ट्रे, प्रियक्रोष्टवे

प्रियक्रोष्टुना

प्रियक्रोष्टुने

प्रियक्रोष्टूनाम्

सुलु । सुलुनी । सुलूनि

सुल्वा, सुलुना

धातृ । धातृणी । धातॄणि

हे धातः !, हे धातृ !

धात्रा, धातृणा

एवं ज्ञातृ–कर्त्रादयः

प्रद्यु । प्रद्युनी । प्रद्यूनि

प्रद्युनेत्यादि

प्ररि । प्ररिणी । प्ररीणि

प्ररिणा । प्रराभ्याम् । प्रराभिः

'प्रराणाम्' इति

---

१–"तृतीयादिषु भाषितपुंस्कं पुंवद्गालवस्य" । २–"अस्थि-दधि-सक्थ्य-क्ष्णामनङुदात्तः" । ३–"एच इग्घ्रस्वादेशे" । ४–'नुमचिरतृज्वद्भावेभ्य' इति नुट्यात्वे 'प्रराणा'मिति माधवः । वस्तुतस्तु सन्निपातपरिभाषया नुट्यात्वं न । 'नामी'ति दीर्घस्यारम्भसामर्थ्यात्परिभाषां बाधत इत्युक्तम् ।

---

* उक्तञ्च –'पीलुर्वृक्षः फलं पीलु, पीलुने न तु पीलवे ।
वृक्षे निमित्तं पीलुत्वं, तज्जत्वं तत्फले पुनः ॥' इति ॥

प्रीणाम्

सुनु । सुनुनी । सुनूनि

सुनुना

सुनुने-इत्यादि

* इत्यजन्तनपुंसकलिङ्गप्रकरणम् *

—०*०—

## * अथ हलन्तपुँल्लिङ्गप्रकरणम् *

लिट्, लिड्

लिहौ । लिहः

लिहम् । लिहौ । लिहः

लिहा । लिड्भ्याम्

लिट्त्सु, लिट्सु

उपदेशे किम् ? अधोग्

दामलिट्

इह तु न—गर्धप्

तेनेह न—दुग्धम्

दोग्धा

धुक्[3], धुग्

दुहौ । दुहः

धुक्षु

[4]ध्रुक्, ध्रुग्, ध्रुट्, ध्रुड्

द्रुहौ । द्रुहः

ध्रुग्भ्याम्, ध्रुड्भ्याम्

ध्रुक्षु, ध्रुट्त्सु, ध्रुट्सु

एवं मुह-ष्णुह-ष्णिहाम्

विश्ववाट्, विश्ववाड्

विश्ववाहौ, विश्ववाहः

विश्ववाहम् । विश्ववाहौ

विश्वौहः । विश्वौहेत्यादि

[6]अनड्वान् । हे[7] अनड्वन् !

अनड्वाहौ । अनड्वाहः

अनडुहा । [8]अनडुद्भ्यामित्यादि

सान्तेति किम् ? विद्वान्

---

१—"हो ढः" । २—दामलिहमात्मानमिच्छतीति दामलिह्यति, ततः क्विप् । ३—"दादेर्धातोर्घः" "एकाचो बशो भष् झषन्तस्य स्ध्वोः" । ४—"वा द्रुह-मुह-ष्णुह-ष्णिहाम्" । ५—"इग्यणः सम्प्रसारणम्" "वाह ऊठ्" "सम्प्रसारणाच्च" । ६—"चतुरनडुहोरामुदात्तः" "सावनडुहः" । 'आ'दित्यधिकारादवर्णात्परोऽयं नुम् । अतो विशेषविहितेनाऽपि नुमा आम् न बाध्यते । अमा च नुम् न बाध्यते । सोर्लोपः । नुम्विधिसामर्थ्यात् 'वसु-स्रंस्वि'-ति दत्वं न । संयोगान्तलोपस्याऽसिद्धत्वान्नलोपो न । ७ "अम्सम्बुद्धौ" । ८—"वसु-स्रंसु-ध्वंस्वनडुहां दः" ।

पदान्ते किम् ? स्रस्तम् । ध्वस्तम्

तुराषाट्[1], तुराषाड्

तुरासाहौ । तुरासाहः

तुराषाड्भ्यामित्यादि

सुद्यौः[2] । सुदिवौ । सुदिवः

सुदिवम् । सुदिवौ

सुद्युभ्याम्[3] । सुद्युभिः

चत्वारः । चतुरः

चतुर्भिः । चतुर्भ्यः २

चतुर्णाम्[4] । चतुर्षु[5]

प्रियचत्वाः । हे प्रियचत्वः ।

प्रियचत्वारौ । प्रियचत्वारः

गौणत्वे तु—प्रियचतुराम्

प्राधान्ये तु—परमचतुर्णाम्

कमल् । कमलौ । कमलः

कमल्षु

प्रशाम्यतीति—प्रशान्[6]

प्रशामौ । प्रशामः

प्रशान्भ्यामित्यादि

कः[7] । कौ । के

कम् । कौ । कान्—सर्ववत्

अयम्[8] । इमौ[9] । इमे

अनेन[10] । आभ्याम्[11] । एभिः[12]

अस्मै । आभ्याम् । एभ्यः

अस्मात् । आभ्याम् । एभ्यः

अस्य । अनयोः । एषाम्

अस्मिन् । अनयोः । एषु

ककारयोगे तु—अयकम्

इमकौ । इमके

इमकम् । इमकौ । इमकान्

इमकेन । इमकाभ्याम् । इमकैः

एनम्[13] । एनौ । एनान्

एनेन । एनयोः २

सुगण् । सुगणौ । सुगणः

सुगण्ठ्सु, सुगण्ट्सु, सुगण्सु

सुगाण् । सुगाणौ । सुगाणः

सुगाण्ठ्सु, सुगाण्ट्सु,
सुगाण्सु

---

१—"सहेः साडः सः" । २—"दिव औत्" । ३—दिव उत्" । ४—"षट्चतुर्भ्यश्च" । ५—"रोः सुपि" "खरोऽचि" । ६—"मो नो धातोः" । ७—"किमः कः" । ८—"इदमो मः" "इदोऽय् पुंसि" । ९—"दश्च" । १०—"अनाप्यकः" । ११—"हलि लोपः" 'नाऽनर्थकेऽलोन्त्यविधिरनभ्यासविकारे' "आद्यन्तवदेकस्मिन्" । १२—"नेदमदसोरकोः" । १३—"इदमोऽन्वादेशेऽशनुदात्तस्तृतीयादौ" । "द्वितीयाटौस्स्वेनः" ।

राजा । हे[1] राजन् ।
परमे व्योमन्
चर्मतिलः[2] । ब्रह्मनिष्ठः
राजानौ । राजानः
राजानम् । राजानौ
राज्ञः[3] । राज्ञा
राजभ्याम्[4] । राजभिः
राज्ञे । राजभ्यः
राज्ञः २ । राज्ञोः । राज्ञाम्
राज्ञि, राजनि
प्रतिदिव्यतीति—प्रतिदिवा
प्रतिदिवानौ । प्रतिदिवानः
प्रतिदीव्नः । प्रतिदीव्नेत्यादि
यज्वा । यज्वानौ । यज्वानः

यज्वनः[5] । यज्वना । यज्वभ्या-
मित्यादि
ब्रह्मणः । ब्रह्मणा । ब्रह्मभ्या-
मित्यादि
वृत्रहा[7] । हे वृत्रहन् ।
वृत्रहणौ[8] । वृत्रहणः
वृत्रहणम् । वृत्रहणौ
प्रहण्यात्[9] । प्रघ्नन्ति[10]
वृत्रघ्नः[11] । वृत्रघ्ना-इत्यादि
एवं—शार्ङ्गिन्यशस्विन्नर्यमन्पूषन्
अर्यम्णि, अर्यमणि
पूष्णि, पूषणि
मघवान्[12] । मघवन्तौ । मघवन्तः
हे मघवन् । हे मघवन्तौ ।

१—"न ङिसम्बुद्ध्योः" । २—"ङावुत्तरपदे प्रतिषेधो वक्तव्यः" । ३—"अल्लोपोऽनः" "स्तोः श्चुनाश्चुः" । न चाऽल्लोपः स्थानिवत्, पूर्वत्रासिद्धे तन्निषेधात् । नाऽपि बहिरङ्गतयाऽसिद्धः, यथोद्देशपक्षे षाष्ठीं परिभाषां प्रति श्चुत्वस्याऽसिद्धतयाऽन्तरङ्गाभावेन परिभाषाया अप्रवृत्तेः । 'यञोर्ज्ञः' । ४—"नलोपः सुप्स्वरसञ्ज्ञातुग्विधिषु कृति" । ५—"हलि च" । ६—"न संयोगाद्वमन्तात्" । ७—"इन् हन् पूषार्यम्णां शौ" "सौ च" । ८—"एकाजुत्तरपदे णः" इति णत्वम् । ९—"हो हन्तेर्ञ्णिन्नेषु" "हन्तेः" । १०—"अत्पूर्वस्य" । ११—योगविभागसामर्थ्यात् "अनन्तरस्य विधिर्वा भवति प्रतिषेधो वा" इति न्यायं बाधित्वा 'एकाजुत्तरपदे' इति णत्वमपि निवर्त्यते । नकारे परे कुत्वविधिसामर्थ्यादल्लोपो न स्थानिवत् । यत्तु 'वृत्रघ्न' इत्यादौ वैकल्पिकं णत्वं माधवेनोक्तं तद्भाष्यवार्तिकविरुद्धम् । १२—"मघवा बहुलम्" "उगिदचां सर्वनामस्थानेऽधातोः" । इह दीर्घे कर्तव्ये संयोगान्तलोपस्याऽसिद्धत्वं न भवति, बहुलग्रहणात् ।

हे मघवन्तः !
मघवतः । मघवता । मघवद्भ्यामित्यादि
तृत्वाभावे—मघवा । मघवानौ
मघवानः । मघोनः[1]
अन्नन्तानां किम् ? मघवतः
मघवता । स्त्रियां—मघवती
अतद्धिते किम् ? माघवनम्
मघोना । मघवभ्यामित्यादि
शुनः । शुना । श्वभ्यामित्यादि
यूनः[2] । यूना । युवभ्यामित्यादि
अर्वा । हे अर्वन् !
अर्वन्तौ[3] । अर्वन्तः
अर्वन्तम् । अर्वन्तौ । अर्वतः
अर्वता । अर्वद्भ्यामित्यादि
अनञः किम् ? अनर्वा । यज्ववत्
पन्थाः[4] । पन्थानौ । पन्थानः
पन्थानम् । पन्थानौ
पथः[5] । पथा । पथिभ्यामित्यादि

एवम्—मन्थाः—ऋभुक्षाः
सुपथी । सुमथी नगरी
अनृभुक्षी सेना । सुपथि वनम्
हे[6] सुपथिन् !, हे सुपथि !
सुपथी । सुपन्थानि
सुपथा । सुपथे
सुपथिभ्यामित्यादि
पञ्च[7] । पञ्च
सङ्ख्या किम् ? विप्रुषः । पामानः
'शतानि'[8] 'सहस्राणि'
पञ्चभिः । पञ्चभ्यः २
पञ्चानाम्[9] । पञ्चसु
परमपञ्च । परमपञ्चानाम्
प्रियपञ्चा । प्रियपञ्चानौ
प्रियपञ्चानः । प्रियपञ्चाम्
एवं सप्तन्—नवन्—दशन्
अष्टौ[10] २ । परमाष्टौ । परमाष्टौ
अष्टाभिः । अष्टाभ्यः २

---

१—"श्व-युव-मघोनामतद्धिते" "सम्प्रसारणाच्च" "आद्गुणः"। २—"न सम्प्रसारणे सम्प्रसारणम्" । ३—"अर्वणस्त्रसावनञः" । ४—"पथि-मथ्यृ-भुक्षामात्" "इतोऽत्सर्वनामस्थाने" "थो न्थः" । ५—"भस्य टेर्लोपः" । ६—"सम्बुद्धौ नपुंसकानां नलोपो वा वाच्यः" । ७—"ष्णान्ता षट्" "षड्भ्यो लुक्" । ८—अत्र सन्निपातपरिभाषया न लुक्, सर्वनामस्थानसन्निपातेन कृतस्य नुमस्तद्विघातकत्वात् । ९—"षट् चतुर्भ्यश्च" "नोपधायाः" । १०—"अष्टन आ विभक्तौ" "अष्टाभ्य औश्" । 'अष्टभ्य' इति वक्तव्ये कृताऽऽत्वनिर्देशो जश्शसंविषये आत्वं ज्ञापयति ।

अष्टानाम् । अष्टासु
आत्वाभावे,—अष्ट। अष्ट। शेषं पञ्चवत्
गौणत्वे त्वात्वाभावे—राजवत्
प्रियाष्ट्नः । 'प्रियाष्ट्ना' इत्यादि
प्रियाष्टाभ्याम् ३ । प्रियाष्टाभिः
प्रियाष्टाभ्यः २ । प्रियाष्टासु
भुत्, भुद्
बुधौ । बुधः
बुधा । भुद्भ्याम् ३ । भुत्सु
युङ्[2] । युञ्जौ । युञ्जः
युञ्जम् । युञ्जौ । युजः
युजा । युग्भ्यामित्यादि
असमासे किम् ?
सुयुक्[3] । सुयुग्
सुयुजौ । सुयुजः
युक्[4]

खन् । खञ्जौ । खञ्जः
राट्, राड्
राजौ । राजः
राट्सु, राट्त्सु
एवम्—विभ्राट्
देवेट् । देवेजौ । देवेजः
विश्वसृट्, विश्वसृड्
विश्वसृजौ । विश्वसृजः । परिमृट्
विभ्राक्, विभ्राग्
विभ्राग्भ्यामित्यादि
परिव्राट्[5]
परिव्राजौ । परिव्राजः
विश्वाराट्[6], विश्वाराड्
विश्वराजौ । विश्वराजः
विश्वराड्भ्यामित्यादि
भृट्[7], भृड् । भृज्जौ । भृज्जः
ऋत्विक्, ऋत्विग्

---

१—इह पूर्वस्मादपि विधावल्लोपस्य स्थानिवद्भावान्न ष्टुत्वम् । कार्यकालपक्षे बहिरङ्गस्याऽल्लोपस्याऽसिद्धत्वाद्वा । २—"ऋत्विग्दधृक्स्रग्दिगुष्णिगञ्चुयुजिक्रुञ्चां च" "कृदतिङ्" "वेरपृक्तस्य" "युजेरसमासे" "क्विन्प्रत्ययस्य कुः" । ३—"चोः कुः" । ४—'युजे'रिति धातुपाठपठितेकारविशिष्टस्याऽनुकरणं न त्विका निर्देशः । तेनेह न—युज्यते समाधत्ते इति—युक् । ५—परित्यज्य सर्वं व्रजतीति विग्रहः । "परौ व्रजेः षः पदान्ते" । ६—"विश्वस्य वसुराटोः" । विश्वं वसु यस्य स इति विग्रहः । ७—"स्कोः संयोगाद्योरन्ते च" ।

ऋत्विजौ । ऋत्विजः
ऊर्क्[1], ऊर्ग् । ऊर्जौ । ऊर्जः
स्यः । त्यौ । त्ये
त्यम् । त्यौ । त्यान्
सः । तौ । ते
परमसः । परमतौ । परमते
नेह[2]—त्वम्
त्यद् । त्यदौ । त्यदः
अतित्यद् । अतित्यदौ । अतित्यदः
यः । यौ । ये
एषः । एतौ । एते
अन्वादेशे तु—एनम्
एनौ । एनान्
एनेन । एनयोः[3]
त्वम्[3] । अहम्
'त्वं[4] स्त्री' 'अहं स्त्री'ति
परमत्वम् । परमाहम्
अतित्वम् । अत्यहम्
भाषायां किम् ? युवं वस्त्राणि
युवाम्[5] । आवाम्
मपर्यन्तस्य किम् ?
साकच्कस्य मा भूत्
युवकाम् । आवकाम्
'त्वया' 'मये' त्यत्र—
'त्व्या' 'म्ये'ति मा भूत्
यूयम्[6] । वयम्
परमयूयम् । परमवयम्

---

१—"तदोः सः सावनन्त्ययोः" । २—'द्विपर्यन्ताना'मित्येव । न च तकारोच्चारणसामर्थ्यान्नेति वाच्यम्, अतित्वमिति गौणे चरितार्थत्वात् । संज्ञायां गौणत्वे चाऽत्वसत्वे न । ३-"ङे प्रथमयोरम्" "त्वाहौ सौ" "शेषे लोपः" । ४—ननु 'त्वं स्त्री' 'अहं स्त्री' इत्यत्र 'त्व-अम्' 'अह-अम्' इति स्थिते, अमि पूर्वरूपं परमपि बाधित्वाऽन्तरङ्गत्वाट्टाप् प्राप्नोति । सत्यम्, अलिङ्गे युष्मदस्मदी, तेन स्त्रीत्वाऽभावान्न टाप् । यद्वा 'शेष' इति सप्तमी स्थानिनोऽविकरणत्वविवक्षया । तेन मपर्यन्ताच्छेषस्य 'अ'दित्यस्य लोपः । स च परोऽप्यन्तरङ्गे 'अतो गुणे' कृते प्रवर्तते, तेन अदन्तत्वाऽभावान्न टाप् । ५—"युवावौ द्विवचने" "प्रथमायाश्च द्विवचने भाषायाम्" । ६—"यूयवयौ जसि" । इह 'शेषे लोपोऽन्त्यलोप' इति पक्षे जसः शी प्राप्तः, 'अङ्गकार्ये कृते पुनर्नाङ्गकार्य'मिति न भवति । 'ङेप्रथमयो'रित्यत्र मकारान्तं प्रश्लिष्य 'अम् मान्त एवाऽवशिष्यते न तु विक्रियते' इति व्याख्यानाद्वा ।

अतियूयम् । अतिवयम्
त्वाम्[१] । माम्
युवाम् । आवाम्
युष्मान्[२] । अस्मान्
त्वया[३] । मया
युवाभ्याम्[४] । आवाभ्याम्
युष्माभिः । अस्माभिः
तुभ्यम्[५] । मह्यम्
परमतुभ्यम् । परममह्यम्
अतितुभ्यम् । अतिमह्यम्
अतितुभ्यम् । आवाभ्याम्
युष्मभ्यम्[६] । अस्मभ्यम्
त्वत्[८] । मत्
युवाभ्याम् । आवाभ्याम्
युष्मत्[८] । अस्मत् । तव[९] । मम
युवयोः । आवयोः
युष्माकम्[१०] । अस्माकम्
त्वयि । मयि
युवयोः । आवयोः
युष्मासु । अस्मासु
'समस्यमाने'त्यादि[११]
अतित्वम्[१२] । अत्यहम्
अतित्वाम् । अतिमाम्
अतियूयम् । अतिवयम्
अतित्वाम् २ । अतिमाम् २
अतित्वान् । अतिमान्

१–"त्वमावेकवचने" "द्वितीयायां च" । २–"शसो न" । ३–"योऽचि" । ४–"युष्मदस्मदोरनादेशे" । ५–"तुभ्यमह्यौ ङयि" । ६–भ्यसोऽभ्यम्" । ७–"एकवचनस्य च" । ८–"पञ्चम्या अत्" । ९–"तवममौ ङसि" "युष्मदस्मद्भ्यां ङसोऽश्" । १०–"साम आकम्" । भाविनः सुटो निवृत्त्यर्थं ससुट्कनिर्देशः । ११–समस्यमाने द्व्येकत्ववाचिनी युष्मदस्मदी ।

समासार्थोऽन्यसङ्ख्यश्चेत्स्तो युवावौ त्वमावपि ॥ १ ॥
सु-जस्-ङे-ङस्सु परत आदेशाः स्युः सदैव ते ।
त्वाहौ यूयवयौ तुभ्यमह्यौ तवममावपि ॥ २ ॥
एते परत्वाद्बाधन्ते युवावौ विषये स्वके ।
त्वमावपि प्रबाधन्ते पूर्वविप्रतिषेधतः ॥ ३ ॥
द्व्येकसङ्ख्यः समासार्थो बह्वर्थे युष्मदस्मदी ।
तयोरद्व्येकतार्थत्वान्न युवावौ त्वमौ च न ॥ ४ ॥

१२–त्वां मां वाऽतिक्रान्त इति विग्रहे ।

अतित्वया । अतिमया
अतित्वाभ्याम् । अतिमाभ्याम्
अतित्वाभिः । अतिमाभिः
अतितुभ्यम् । अतिमह्यम्
अतित्वाभ्याम् । अतिमाभ्यम्
अतित्वभ्यम् । अतिमभ्यम्
अतित्वत् २ । अतिमत् २
अतितव । अतिमम
अतित्वयोः । अतिमयोः
अतित्वाकम् । अतिमाकम्
अतित्वयि । अतिमयि
अतित्वयोः । अतिमयोः
अतित्वासु । अतिमासु
[1]अतियुवाम् ३ । अत्यावाम् ३
अतियुवान् । अत्यावान्
अतियुवया । अत्यावया
अतियुवाभ्याम् ३ । अत्यावाभ्याम् ३
अतियुवाभिः । अत्यावाभिः
अतियुवभ्यम् । अत्यावभ्यम्
अतियुवत् २ । अत्यावत् २
अतियुवयोः २ । अत्यावयोः २
अतियुवाकम् । अत्यावाकम्
अतियुवयि । अत्यावयि
अतियुवासु । अत्यावासु
[2]अतियुष्माम् ३ । अत्यस्माम् ३
अतियुष्मान् । अत्यस्मान्
अतियुष्मया । अत्यस्मया
अतियुष्माभ्याम् ३ । अत्यस्माभ्याम् ३
अतियुष्माभिः । अत्यस्माभिः
अतियुष्मभ्यम् । अत्यस्मभ्यम्
अतियुष्मत् २ । अत्यस्मत् २
अतियुष्मयोः २ । अत्यस्मयोः २
अतियुष्माकम् । अत्यस्माकम्
अतियुष्मयि । अत्यस्मयि
अतियुष्मासु । अत्यस्मासु
[3]पदात्परयोः किम् ?
त्वां पातु । मां पातु
अपादादौ किम् ?
'वेदैरशेषैः संवेद्योऽस्मान्
कृष्णः सर्वदाऽवतु'

१–युवामावां वाऽतिक्रान्त इति विग्रहे— । सु-जस्-ङे-ङस्सु प्राग्वद्रूपं बोध्यम् । २–युष्मानस्मान्वेति विग्रहे— । ३–"युष्मदस्मदोः षष्ठी-चतुर्थी द्वितीया-स्थयोर्वांनावौ" "बहुवचनस्य वस्-नसौ" "तेमयावेकवचनस्य" "त्वामौ द्वितीयायाः" । क्रमेणोदाहरणमाह—

श्रीशस्त्वाऽवतु मापीह दत्ताचे मेऽपि शर्म सः ।
स्वामी ते मेऽपि स हरिः पातु वामपि नौ विभुः ॥ १ ॥

नेह–'इति युष्मत्पुत्रो ब्रवीति'
'इत्यस्मत्पुत्रो ब्रवीति'
तेनेह न-'ओदनं पच तव भविष्यति'
इह तु स्यादेव–
'शालीनां ते ओदनं दास्यामी'ति
अन्वादेशे तु–
धाता ते भक्तोऽस्ति
धाता तव भक्तोऽस्तीति वा
'तस्मै ते नम' इत्येव
'हरिस्त्वां मां च रक्षतु'
'कथं त्वां मां वा न रक्षे'दित्यादि
हरौ हरिश्च मे स्वामो
"चेतसा त्वां समोक्षते
भक्तस्तव रूपं ध्यायति
आलोचने तु–
भक्तस्त्वा पश्यति चक्षुषा
'भक्तस्त्वमप्यहं तेन हरिस्त्वां–
त्रायते स माम्'
'वा' 'मे' ति वा
अग्ने तव
देवाऽस्मान् पाहि। अग्ने नय
अग्न इन्द्र वरुण
'सर्वदा रक्ष देव नः'
एवम्–'इमं मे गङ्गे यमुने' इति
हरे दयालो नः पाहि
अग्ने तेजस्विन्
'युवं प्रभवो देवाः शरण्याः !
युष्मान् भजे, वो भजे, इति वा
सुपात्, सुपाद्
सुपादौ। सुपादः

सुखं वां नौ ददात्वीशः पतिर्वामपि नौ हरिः।
सोऽव्याद्वो नः शिवं वो नो दद्यात्सेव्योऽत्र वः स नः ॥ २ ॥

१–"समानवाक्ये निघातयुष्मदस्मदादेशा वक्तव्याः" "एकतिङ् वाक्यम्"। २–"एते वांनावादय आदेशा अन्वादेशे वा वक्तव्या"। ३–"न चवाहाऽहैव-युक्ते"। ४–"युक्त' ग्रहणात्साक्षाद्योगेऽयं निषेधः। परम्परासम्बन्धे त्वादेशः स्यादेव। ५–"पश्यार्थैश्चाऽनालोचने"। ६–"सपूर्वायाः प्रथमाया विभाषा"। ७–"आमन्त्रितम्" "आमन्त्रितं पूर्वमविद्यमानवत्"। इह युष्मदस्मदोरादेश-स्तिङन्तनिघात आमन्त्रितनिघातश्च न। ८–"नामन्त्रिते समानाधिकरणे सामा-न्यवचनम्"। ९–"विभाषितं विशेषवचने। अत्र भाष्यम्–'बहुवचनमिति वक्ष्यामि' इति। (३):

सुपादम् । सुपादौ
सु[1]पदः
सुपदा । सपाद्भ्यामित्यादि
अग्निमत्, अग्निमद्
अग्निमथौ । अग्निमथः
अग्निमद्भ्यामित्यादि
प्रा[2]ङ् । प्राञ्चौ । प्राञ्चः
प्राञ्चम् । प्राञ्चौ । प्रा[3]चः
प्राचा । प्राग्भ्यामित्यादि
प्रत्यङ् । प्रत्यञ्चौ । प्रत्यञ्चः
प्रत्यञ्चम् । प्रत्यञ्चौ । प्र[4]तीचः
प्रतीचा
अ[5]मुमुयङ् । अमुमुयञ्चौ
अमुमुयञ्चः
अमुमुयञ्चम् । अमुमुयञ्चौ
अमुमुईचः
अमुमुईचा । अमुमुयग्भ्या-
मित्यादि
अ[6]दमुयङ् । पक्षे—*अदद्र्यङ्
विष्वग्देवयोः किम् ? अश्वाचा
अञ्चतौ किम् ? विष्वग्युक्
अप्रत्यये किम् ? विष्वगञ्चनम्
तेन[7]—अयस्कारः
उदङ् । उदञ्चौ । उदञ्चः
उ[8]दीचः
उदीचा । उदग्भ्यामित्यादि
स[9]म्यङ् । सम्यञ्चौ । सम्यञ्चः
समीचः । समीचा
सध्र्यङ्[10]
ति[11]र्यङ् । तिर्यञ्चौ । तिर्यञ्चः
तिर्यञ्चम् । तिर्यञ्चौ । तिरश्चः
तिरश्चा । तिर्यग्भ्यामित्यादि

१—"पादः पत्" इति सूत्रेण पदादेशः । २—"अनिदितां हल उपधायाः क्ङिति" "उगिदचां सर्वनामस्थानेऽधातोः" "संयोगान्तस्य लोपः", "क्विन्प्रत्ययस्य कुः" । ३—"अचः" "चौ" । ४—अत्र 'अचः' इति लोपस्य विषयेऽन्तरङ्गोऽपि यण् न प्रवर्तते, 'अकृतव्यूहाः' इति परिभाषया । ५—"विष्वग्देवयोश्च टेरद्र्यञ्चतावप्रत्यये" "अदसोऽसेर्दादु दो मः" । ६—'अन्त्यबाधेऽन्त्यसदेशस्य' । ७—अप्रत्ययग्रहणं ज्ञापयति—'अन्यत्र धातुग्रहणे तदादिविधिः' । ८—"उद ईत्" । ९—"समः समि" । १०—"सहस्य सध्रिः" । ११—"तिरसस्तिर्यलोपे" ।

* उक्तञ्च—'अदसोऽद्रेः पृथङ् मुत्वं केचिदिच्छन्ति लत्ववत् ।
केचिदन्त्यसदेशस्य नेत्येकेऽसेर्हि दृश्यते ।' इति ।

प्राङ् । प्राञ्चौ । प्राञ्चः
प्राञ्चा । प्राङ्भ्याम्
प्राङ्क्षु, प्राङ्षु
एवं पूजार्थे प्रत्यङ्ङादयः
क्रुङ् । क्रुञ्चौ । क्रुञ्चः
क्रुङ्भ्यामित्यादि
पयोमुक्, पयोमुग्
पयोमुचौ । पयोमुचः
सुवृट्, सुवृड्
सुवृश्चौ । सुवृश्चः
सुवृश्चा
सुवृट्त्सु, सुवृट्सु
²महान् । महान्तौ । महान्तः
हे महन् ! । महतः
महता । महद्भ्यामित्यादि
³धीमान् । धीमन्तौ । धीमन्तः
हे धीमन् !
अज्ग्रहणं नियमार्थम्
तेन सूत्-ध्वत्-इत्यादौ न

गोमान्। गोमन्तौ
गोमन्तः—इत्यादि
भवान् । भवन्तौ । भवन्तः
भवतीति—भवन्
ददत्, ददद् । ददतौ । ददतः
जक्षत्, जक्षद्
जक्षतौ । जक्षतः
एवं जाग्रत्-दरिद्रत्—
शासत्-चकासत्
दीध्यत् । वेव्यत्
गुप्, गुब्
गुपौ । गुपः । गुब्भ्यामित्यादि
तादृक्, तादृग्
तादृशौ । तादृशः
विट्, विड्
विशौ । विशः । विशम्
नक्, नग्, नट्, नड्
नशौ । नशः
नग्भ्याम्, नड्भ्यामित्यादि

१—"नाञ्चेः पूजायाम्" । २—'वर्तमाने पृषन्महद्बृहज्जगच्छतृवच्च' एते निपात्यन्ते । मह्यते पूज्यते इति विग्रहः । ३—"अत्वसन्तस्य चाऽधातोः" । ४—धातोश्चेदुगित्कार्यं तर्ह्यञ्चतेरेवेति नियमस्वरूपम् । ५—गोमन्तमिच्छति गोमानिवाचरतीति वा विग्रहे क्यजन्तादाचारक्विबन्ताद्वा कर्तरि क्विप् । ६—"उभे अभ्यस्तम्" "नाभ्यस्ताच्छतुः" । ७—जक्षित्यादयः षट्" । ८—"त्यदादिषु दृशोऽनालोचने कञ्च" "आ सर्वनाम्नः" । ९—"नशेर्वा" ।

घृतस्पृक्, घृतस्पृग्
घृतस्पृशौ । घृतस्पृशः । स्पृक्[1]
दधृक्, दधृग्
दधृषौ । दधृषः
दधृभ्यामित्यादि
रत्नमुट्, रत्नमुड्
रत्नमुषौ । रत्नमुषः
षट्, षड्
षड्भिः । षड्भ्यः २
षण्णाम्
षट्त्सु, षट्सु
परमषट् । परमषण्णाम्
गौणत्वे तु—प्रियषषः
प्रियषषाम्
पिपठीः । पिपठिषौ[2]
पिपठिषः । पिपठीर्भ्याम्
पिपठीष्षु, पिपठीःषु[3]
निंस्स्व । निंस्से
[4]तेनेह न—सुहिन्सु । पुंसु
चिकीः । चिकीर्षौ
चिकीर्षः
चिकीर्षु

दोः । दोषौ । दोषः
दोष्णः । दोष्णा
दोषः । दोषा
विविट्, विविड्
विविक्षौ । विविक्षः
तट्, तड् । तक्षौ । तक्षः
गोरट्, गोरड्
गोरक्षौ । गोरक्षः
तक्, तग्
गोरक्, गोरग्
पिपक्, पिपग्
एवं विवक् । दिधक्
सुपीः । सुपिसौ
सुपिसः
सुपिसा । सुपीर्भ्याम्
सुपीःषु, सुपीष्षु
एवं सुतूः
विद्वान् । विद्वांसौ । विद्वांसः
हे विद्वन् ।
विद्वांसम् । विद्वांसौ । विदुषः[5]
विदुषा । विद्वद्भ्या-[6]
मित्यादि

---

१—"स्पृशोऽनुदके क्विन्" । २—"र्वोरुपधाया दीर्घ इकः" । ३—"नुम्विसर्ज-नीयशर्व्यवायेऽपि" । ४—नुम्ग्रहणं नुम्स्थानिकानुस्वारोपलक्षणार्थं, व्याख्यानात् । ५—"वसोः सम्प्रसारणम्" । ६—"वसु-स्रंसु-ध्वंस्वनडुहां दः" इति दत्वम् ।

सेदिवान् । सेदिवांसौ
सेदिवांसः । सेदिवांसम्
सेदुषः
सेदुषा । सेदिवद्भ्यामित्यादि
सुहिन् । सुहिंसौ । सुहिंसः
सुहिन्भ्याम् । सुहिन्त्सु
ध्वत्, ध्वद् । ध्वसौ । ध्वसः
ध्वद्भ्याम् । एवं स्रत्
'बहुपुंसी' त्यत्र
पुमान् । हे पुमन् !
पुमांसौ । पुमांसः । पुंसः
पुंसा । पुंभ्याम् । पुंभिः । पुंसु
हे उशनन् !, हे उशन !
हे उशनसः !
उशनोभ्यामित्यादि
अनेहा । अनेहसौ । अनेहसः
हे अनेहः !
अनेहोभ्यामित्यादि
वेधाः । वेधसौ । वेधसः
हे वेधः !
वेधोभ्यामित्यादि
सुवः । सुवसौ । सुवसः
पिण्डं ग्रसते—पिण्डग्रः । पिण्डग्लः
असौ । असकौ । असुकः
अमू । अमो
अमुम् । अमू । अमून्
अमुना
अमूभ्याम् ३ । अमीभिः
अमुष्मै । अमीभ्यः २
अमुष्मात्
अमुष्य । अमुयोः
अमीषाम्
अमुष्मिन्
अमुयोः । अमीषु

* इति हलन्तपुँल्लिङ्गप्रकरणम् *

—:*:—

१—"पुंसोऽसुङ्" । २—"अस्य सम्बुद्धौ वाऽनङ् नलोपश्च वा वाच्यः" । ३—"अदस औ सुलोपश्च" । ४—"औत्वप्रतिषेधः साऽकच्कस्य वा वक्तव्यः, साद्गुत्वं च" । ५—"एत ईद्बहुवचने" । ६—"न मुने" ।

## ❀ अथ हलन्तस्त्रीलिङ्गप्रकरणम् ❀

उपानत्, उपानद्
उपानहौ । उपानहः
उपानद्भ्याम् । उपानत्सु
उष्णिक्, उष्णिग्
उष्णिहौ । उष्णिहः
उष्णिग्भ्याम् । उष्णिक्षु
द्यौः । दिवौ । दिवः
द्युषु
गीः । गिरौ । गिरः
एवं पूः
चतस्रः २ । चतसृणाम्
का । के । काः—सर्वावत्
इयम् । इमे । इमाः
इमाम् । इमे । इमाः
अनया । आभ्याम् ३ । आभिः
अस्यै । अस्याः २
अनयोः २ । आसाम्
अस्याम् । आसु
अन्वादेशे तु—एनाम्
एने । एनाः
एनया । एनयोः २
स्रक्, स्रग्
स्रजौ । स्रजः
स्रग्भ्याम् । स्रक्षु
स्या । त्ये । त्याः
एवं तद्-यद्-एतद्
वाक्, वाग्
वाचौ । वाचः
वाग्भ्याम् । वाक्षु
आपः । अपः
अद्भिः । अद्भ्यः २
अपाम् । अप्सु
दिक्, दिग्
दिशौ । दिशः
दिग्भ्याम् । दिक्षु
दृक्, दृग्
दृशौ । दृशः
त्विट्, त्विड्
त्विषौ । त्विषः
त्विड्भ्याम्
त्विट्त्सु । त्विट्सु
सजूः । सजुषौ । सजुषः
सजूर्भ्याम्
सजूष्षु, सजूःषु

१—"नहो धः" । २—"यः सौ" । ३—अत्र 'अप्तृ'न्निति दीर्घः । ४—"अपो भि"। ५—"त्यदादिषु दृशोऽनालोचने कञ्च"इति दृशेः क्विन्विधानादन्यत्रापि कुत्वम्।

आशीः । आशिषौ
आशिषः । आशीर्भ्याम्
असौ । अमू । अमूः
अमूम् । अमू । अमूः
अमुया । अमूभ्याम् । अमूभिः
अमुष्यै । अमूभ्याम् २
अमूभ्यः
अमुष्याः २ । अमुयोः २
अमूषाम्
अमुष्याम् । अमूषु

* इति हलन्तस्त्रीलिङ्गप्रकरणम् *

—:०:—

## ❀ अथ हलन्तनपुंसकलिङ्गप्रकरणम् ❀

स्वनडुत्, स्वनडुद्
स्वनडुही । स्वनड्वांहि[1]–
पुनस्तद्वत् । शेषं पुंवत्
अहर्विमलद्यु
विमलदिवी[2] । विमलदिवि
अपदादिविधौ किम् ? दधिसेचौ
वाः । वारी । वारि
चत्वारि
किम् । के । कानि
इदम् । इमे । इमानि
एनत्[3] । एने । एनानि
एनेन । एनयोः २
ब्रह्म । ब्रह्मणी । ब्रह्माणि
हे[4] ब्रह्मन् !, हे ब्रह्म !
अहर्भाति[5]
अह्नी[6], अहनी । अहानि
अहोभ्याम्[7] । अहोभिः
दीर्घाहा निदाघः
हे दीर्घाहो निदाघ !
दीर्घाहानौ । दीर्घाहानः
दीर्घाह्ना । दीर्घाहोभ्याम्
दण्डि । दण्डिनी । दण्डीनि

१–"चतुरनडुहोरामुदात्तः" इत्यनेनाऽऽम् । २–अन्तर्वर्तिनीं विभक्तिमाश्रित्य पूर्वपदस्यैवोत्तरखण्डस्यापि पदसञ्ज्ञायां प्राप्तायाम्–"उत्तरपदत्वे चाऽपदादिविधौ प्रतिषेधः" इति प्रत्ययलक्षणं न । ३–"अन्वादेशे नपुंसके एनद्वक्तव्यः" । ४–"सम्बुद्धौ नपुंसकानां नलोपो वा वाच्यः" । ५–"रोऽसुपि" । ६–"विभाषा ङिश्योः" । ७–"अहन्"

| | |
|---|---|
| सूग्वि । सूग्विणी । सूग्वीणि | त्यत्, त्यद् । त्ये । त्यानि |
| वाग्मि । वाग्मिनी । वाग्मीनि | तत्, तद् । ते । तानि |
| बहुवृत्रहाणि | यत्, यद् । ये । यानि |
| बहुपूषाणि | एतत्, एतद् । एते । एतानि |
| बह्वर्यमाणि | अन्वादेशे तु—एनत् |
| असृक्, असृग् | बेभित्, बेभिद् |
| असृजी । असृञ्जि | बेभिदी |
| असानि | बेभिदि ब्राह्मणकुलानि |
| असृजा, अस्ना | चेच्छिदि |
| असृग्भ्याम्, असभ्यामित्यादि | *गवाक्, गवाग् |
| ऊर्क्, ऊर्ग् | गोअक्, गोअग् |
| ऊर्जि । ऊन्र्जि | गोऽक्, गोऽग्, |
| बहूर्जि, बहूर्न्जि | गवाङ्, गोअङ्, गोऽङ् |

१—"बहूर्जिनुम्प्रतिषेधः" "अन्त्यात्पूर्वो वा नुम्" । २—"अवङ् स्फोटायनस्य" इत्यवङादेशः । ३—"सर्वत्र विभाषा गोः" इति प्रकृतिमात्रः । ४—"एङः पदान्तादति" इति पूर्वरूपम् । P15, Cx L, L, 6 : 9

* 'जायन्ते नव सौ, तथाऽमि च नव, भ्यांभिस्भ्यसां सङ्गमे-
पट्सङ्ख्यानि नवैव सुप्यथ जसि, त्रीण्येव तद्वच्छसि । H 6 . 1
चत्वार्यन्यवचःसु कस्य विबुधाः ! शब्दस्य रूपाणि त-
ज्जानन्तु प्रतिभाऽस्ति चेन्निगदितुं षाण्मासिकोऽत्रावधिः ॥'

—इति क्वचित् राजसभायां केनचित्प्राचीनपण्डितेन कृतस्याऽऽक्षेपस्य प्राचीनविबुधैरेव 'गवाक्छब्दस्ये'त्यादि-श्लोकद्वयेनोत्तरं प्रदत्तम् । यथा—

'गवाक्छब्दस्य रूपाणि क्लीबेऽर्चा-गति-भेदतः ।
असन्ध्यवङ्पूर्वरूपैर्नवाधिकशतं मतम् ॥१॥
स्वम्सुप्सु नवषड्भादौ षट्के स्युस्त्रीणि जश्शसोः ।
चत्वारि शेषे दशके रूपाणीति विभावय' ॥२॥ इति ॥

गोची, गवाञ्ची,
गोअञ्ची, गोऽञ्ची
गवाञ्चि, गोअञ्चि, गोऽञ्चि
गोचा, गवाञ्चा,
गोअञ्चा, गोऽञ्चा
गवाग्भ्याम्, गोअग्भ्याम्
गोऽग्भ्याम्, गवाङ्भ्याम्
गोअङ्भ्याम्, गोऽङ्भ्याम्
गवाङ्क्षु, गोअङ्क्षु, गोऽङ्क्षु,
गवाङ्षु, गोअङ्षु, गोऽङ्षु
गवाक्षु, गोअक्षु, गोऽक्षु
तिर्यक् । तिरश्ची । तिर्यञ्चि
तिर्यङ् । तिर्यञ्ची । तिर्यञ्चि
यकृत् । यकृती
यकृन्ति, यकानि[1]
यक्ना, यकृता
शकृत् । शकृती
शकृन्ति, शकानि
शक्ना, शकृता
ददत् । ददती
ददन्ति, ददति[2]
तुदत् । तुदन्ती, तुदती[3]
तुदन्ति
भात् । भान्ती, भाती
भान्ति
पचत् । पचन्ती[4] । पचन्ति
दीव्यत् । दीव्यन्ती । दीव्यन्ति
स्वप्, स्वब्
स्वपी । स्वाम्पि, स्वम्पि
स्वपा । स्वब्भ्याम् । स्वब्भिः
धनुः । धनुषी । धनूंषि
धनुषा । धनुर्भ्याम्
एवं चक्षुर्हविरादयः
पिपठीः
पिपठिषी । पिपठिषि
पिपठीर्भ्यामित्यादि
पयः । पयसी । पयांसि
पयसा । पयोभ्यामित्यादि
सुपुम् । सुपुंसी । सुपुमांसि
अदः । अमू । अमूनि

❀ इति हलन्तनपुंसकलिङ्गप्रकरणम् ❀

—०❀०—

१—"पद्दन्नोमास्हृन्निश—" इति वा यकन्नादेशो । २—"वा नपुंसकस्य" इति वैकल्पिके नुमि । ३—"आच्छीनद्योर्नुम्" । ४—"शप्श्यनोर्नित्यम्" इति नुमि ।

## ❀ अथाऽव्ययप्रकरणम् ❀

स्वर्[1] । अन्तर् । प्रातर् । पुनर्
सनुतर् । उच्चैस्
नीचैस् । शनैस्
ऋधक् । ऋते । युगपत्
आरात् । पृथक् । ह्यस्
श्वस् । दिवा । रात्रौ । सायम्
चिरम् । मनाक्
ईषत् । जोषम्
तूष्णीम् । बहिस्
अवम् । समया । निकषा
स्वयम् । वृथा । नक्तम् । नञ्
हेतौ । इद्धा । अद्धा
सामि । वत्
ब्राह्मणवत् । क्षत्रियवत्
सना । सनत् । सनात्
उपधा । तिरस्
अन्तरा । अन्तरेण
ज्योक् । कम् । शम्
सहसा । विना । नाना । स्वस्ति
स्वधा । अलम् । वषट्
श्रौषट् । वौषट्
अन्यत् । अस्ति
उपांशु । क्षमा
विहायसा । दोषा
मृषा । मिथ्या
मुधा । पुरा
मिथो । मिथस्
प्रायस् । मुहुस्
प्रवाहुकम् । प्रवाहिका
आर्यहलम् । अभीक्ष्णम्
साकम् । सार्धम्
नमस् । हिरुक्
धिक् । अथ । अम् । आम्
प्रताम् । प्रशाम्
प्रतान् । मा । माङ्
च । वा । ह । अह
एव । एवम् । नूनम्
शश्वत् । युगपत् । भूयस्
कूपत् । सूपत् । कुवित्
नेत् । चेत् । चण्
कच्चित् । किञ्चित्
यत्र । नह । हन्त
माकिः । माकीम्
नकिः । नकिम् । आकिम्[2]

१—"स्वरादिनिपातमव्ययम्" । २—आकृतिगणोऽयम् ।

आङ् । नञ् । यावत्
तावत् । त्वै । द्वै
न्वै । रै । श्रौषट् । वौषट्
स्वाहा । स्वधा
वषट् । तुम् । तथाहि
खलु । किल । अथो । अथ
सुष्ठु । स्म । आदह
अंवदत्तम् । अहंयुः
अस्तिक्षीरा
अ । आ । इ । ई
उ । ऊ । ए । ऐ
ओ । औ । पशु । शुकम्
यथाकथाच । पाट् । प्याट्
अङ्ग । है । हे
भोः । अये । द्य

विषु । एकपदे । युत्
आतः । अं॰म् । आम्
तसिवती
तेनेह न–पचतिकल्पम्
पचतिरूपम्
स्मा॰रं स्मारं । जीवसे
पिबध्यै । कृ॰त्वा
उदेतोः । विसृपः
अं॰घिहरि
तं॰त्र शालायाम्
विहितविशेषणान्नेह–
अत्युच्चैसौ
*वगाहः । अवगाहः
पिधानम् । अपिधानम्

❀ इत्यव्ययप्रकरणम् ❀

—❀—

१–"उपसर्गविभक्तिस्वरप्रतिरूपकाश्च" । २–तद्धितश्चाऽसर्वविभक्तिः" । ३–"कृन्मेजन्तः" । ४–कुत्वा-तोसुन् कसुनः" । ५–"अव्ययीभावश्च" । ६–"अव्ययादाप्सुपः" ।

* अव्ययलक्षणं यथा—

सदृशं त्रिषु लिङ्गेषु सर्वासु च विभक्तिषु ।
वचनेषु च सर्वेषु यन्न व्येति तदव्ययम् ॥
वष्टि भागुरिरल्लोपमवाप्योरुपसर्गयोः ।
आपं चैव हलन्तानां यथा वाचा निशा दिशा ॥ इति ॥

## ❀ अथ स्त्रीप्रत्ययप्रकरणम् ❀

अजा

अजादिभिः स्त्रीत्वस्य विशेषणान्नेह—

पञ्चाजी

अजा[1] । एडका । अश्वा

चटका । मूषिका । बाला[2]

वत्सा । होडा । मन्दा । विलाता

सम्फला[3] । भस्त्रफला

सत्पुष्पा[4] । प्राक्पुष्पा । प्रत्यक्पुष्पा

शूद्रा[5] । पुंयोगे तु—शूद्री

अमहत्पूर्वा किम् ? महाशूद्री[6]

क्रुञ्चा । उष्णिहा । देवविशा

ज्येष्ठा

कनिष्ठा । मध्यमा । कोकिला

अमूला[7] । कर्त्री[8] । दण्डिनी

भवन्ती[9] । पचन्ती । दीव्यन्ती

तेनेह[10] न—उखास्रत् । पर्णध्वत्

प्राची । प्रतीची

अतिसुत्वरी[11] । अतिधीवरी

शर्वरी

अवावा[12] ब्राह्मणी

राजयुध्वा

बहुधीवरी[13], बहुधीवा

द्विपदी[14], द्विपात्

द्विपदा[15] ऋक् । एकपदा

---

१—अत्र "जातेरस्त्री—"ति सूत्रेण 'ङीष्' प्रत्यये प्राप्ते "अजाद्यतष्टाप्" इति टाप् । २—"वयसि प्रथमे" इति 'ङीप्'प्राप्ते, अजादित्वाट्टाप् । ३—समृद्धानि फलानि यस्या इति विग्रहे "सम्भस्त्राऽजिन-शण-पिण्डेभ्यः फलात्" इति टाप् । ४—सन्ति पुष्पाणि यस्या इति विग्रहे "सदच्काण्ड-प्रान्त शतैकेभ्यः पुष्पात्" इति टाप् । ५—"शूद्रा चाऽमहत्पूर्वा" । ६—महती च सा शूद्रा चेति विग्रहे । ७—अविद्यमानं मूलं यस्या इति विग्रहे "नञोऽस्त्यर्थानां वाच्यो वा चोत्तरपदलोपः" इति बहुव्रीहिः, "मूलान्नञः" । ८—"ऋन्नेभ्यो ङीप्" इति ङीप् । ९—"उगितश्च" । १०—'उगिदचा'मिति सूत्रेऽज्ग्रहणेन धातोश्चेदुगित्कार्यं तर्ह्यञ्चतेरेवेति नियम्यते । ११—"वनोर च" "प्रत्ययग्रहणे यस्मात्स विहितस्तदादेस्तदन्तस्य ग्रहणम्" । १२—अत्र "वनोर च" इति प्राप्तस्य ङीपो रेफस्य च "वनो न हश इति वक्तव्यम्" इति निषेधे । १३—"बहुव्रीहौ वा" । १४—"पादोऽन्यतरस्याम्" । १५—"टाबृचि" इति टाप् ।

पञ्च[1] । चतस्रः

सीमा[2] । सीमानौ

बहुयज्वा[3] । बहुयज्वानौ

सीमा[4] । सीमे । सीमानौ

दामा । दामे । दामानौ

बहुयज्वा । बहुयज्वे

बहुयज्वानौ

बहुराज्ञी[5] । बहुराज्यौ

बहुराजा । बहुराजे । बहुराजानौ

सर्विका[6] । कारिका

अतः किम् ? नौका

प्रत्ययस्थात्किम् ?

शक्नोतीति—शका

असुपः किम् ? बहुपरिव्राजका नगरी

कात्किम् ? नन्दना

पूर्वस्य किम् ? परस्य मा

भूत्—कटुका

तपरः किम् ? राका

अपि किम् ? कारकः

मामिका[7] । नरिका

दाक्षिणात्यिका[8] । इहत्यिका

यका[9] । सका । यकाम् । तकाम्

अधित्यका[10] । उपत्यका

जीवका[11] । भवका

देवदत्तिका[12] । देवका

क्षिपका[13] । ध्रुवका । कन्यका

चटका

तारका[14], तारिका

वर्णका[15] वर्णिका

वर्तका[16] । उदीचां तु—वर्तिका

अष्टका[17], अष्टिका

पुत्रिका[18], पुत्रका

सूतिका, सूतका

---

१—"न षट्स्वस्रादिभ्यः" इति टाब्निषेधः । २—"मनः" इति ङीपो निषेधः । ३—"अनो बहुव्रीहेः" । ४—डाबुभाभ्यामन्यतरस्याम्" । ५—"अन उपधालोपिनोऽन्यतरस्याम्" । ६—प्रत्ययस्थात्कात्पूर्वस्यात इदाप्यसुपः" । ७—"मामक-नरकयोरुपसङ्ख्यानम्" । ८—"त्यक्त्यपोश्च" । ९—"न यासयोः" । १०—"त्यकनश्च निषेधः" । ११—"आशिषि वुनश्च न" । १२-"उत्तरपदलोपे न" । १३-"क्षिपकादीनां च" । १४ "तारका ज्योतिषि" । १५—"वर्णका तान्तवे" । १६—"वर्तका शकुनौ प्राचाम्" । १७—"अष्टका पितृदेवत्ये" । १८—"सूतका—पुत्रिका—वृन्दारकाणां वेति वाच्यम्" ।

वृन्दारिका, वृन्दारका
अर्यका, आर्यिका[1]
चटकका, चटकिका
आतः किम् ? साङ्काशियका
यकेति किम् ? अश्विका
स्त्रीप्रत्ययेति किम् ? शुभंयिका
सुनयिका । सुपाकिका
अनेषका । परमैषका[2]
अद्रके । परमद्रके
'स्विका'—'परमस्विके'ति
निर्भस्त्रका, निर्भस्त्रिका[3]
एषका, एषिका
एतिके—एतिकां
अजका, अजिका
ज्ञका, ज्ञिका । द्वके, द्विके
निःस्वका, निःस्विका
गङ्गका, गङ्गिका[4]
अज्ञाता अखट्वा—अखट्विका

अखट्विका । अखट्वाका
गङ्गाका, गङ्गिका[5]
उत्कपुंस्काचु—शुभ्रिका
कुरुचरी[6]
उपसर्जनत्वान्नेह—बहुकुरुचरा
नदट्—नदी । वक्ष्यमाणा
सौपर्णेयी । ऐन्द्री । औत्सी
ऊरुद्वयसी । ऊरुदघ्नी । ऊरुमात्री
पञ्चतयी । आक्षिकी
लावणिकी । यादृशी । इत्वरी
चौरी[7]
स्त्रैणी[8] । पौंस्नी । शाक्तीकी
आढ्यङ्करणी । तरुणी । तलुनी
गार्गी[9]
द्वीपे[10] भवा—द्वैप्या । दैव्या
गार्ग्यायणी[11]
लौहित्यायनी[12] । कात्यायनी
कौरव्यायणी[13] । माण्डूकायनी

१—"उदीचामातः स्थाने यकपूर्वायाः" । २-"धात्वन्तयकोस्तु नित्यम्" । ३—"भस्त्रैषाजाज्ञाद्वास्वानञ्पूर्वाणामपि" । ४—"अभाषितपुंस्काच्च" । ५—"आदाचार्याणाम्" । ६—"टिड्ढाणञ्-द्वयसज्-दघ्नञ्-मात्रच्-तयप्-ठक्-ठञ्-कञ्-क्वरपः" इति ङीप् । ७—"ताच्छीलिके णेऽपि" । ८—"नञ्स्नञीकक्ख्युंस्तरुण-तलुनानामुपसङ्ख्यानम्" । ९—"यञश्च" "हलस्तद्धितस्य" । १०—'अनपत्याधिकारस्थान्न ङीप्' । ११—"प्राचां ष्फ तद्धितः" "षः प्रत्ययस्य" "आयनेयीनीयियः फढखछघां प्रत्ययादीनाम्" । १२—"सर्वत्र लोहितादिकतन्तेभ्यः" । १३—"कौरव्यमाण्डूकाभ्यां च" ।

आसुरायणी[1] । कुमारी[2]
वधूटी[3] । चिरण्टी
अतः किम् ? शिशुः
त्रिलोकी[4] । त्रिफला
त्र्यनीका सेना
पञ्चाश्वा[5] । द्विविस्ता
द्व्याचिता । द्विकम्बल्या
परिमाणान्तात्तु—द्व्याढकी
तद्धितलुकि किम् ?—पञ्चाश्वी
द्विकाण्डा[6] क्षेत्रभक्तिः
क्षेत्रे किम् ? द्विकाण्डी रज्जुः
द्विपुरुषी[7], द्विपुरुषा वा परिखा
कुण्डोध्नी[8]
स्त्रियां किम् ? कुण्डोध्नं धैनुकम्
द्व्यूध्नी[9] । अत्यूध्नी
अत्यूधाः । द्विदाम्नी[10]
उद्दामा वडवा

द्विहायनी बाला
त्रिहायणी[11] । चतुर्हायणी
त्रिहायना । चतुर्हायना शाला
सुराज्ञी[12] नाम नगरी
वेदे तु—शतमूर्ध्नी
अथो त इन्द्रः केवलीर्विशः[13]
मामकी । भागधेयी । पापी
अपरी । समानी । आर्यकृती
सुमङ्गली । भेषजी
केवला । मामिका
अन्तर्वत्नी[14] । पतिवत्नी
'अन्तरस्त्यस्यां शालायां घटः'
पतिमती पृथिवी
वसिष्ठस्य[15] पत्नी
गृहस्य[16] पतिः—गृहपतिः, गृहपत्नी
दृढपत्नी, दृढपतिः
वृषलपत्नी, वृषलपतिः

१—"आसुरेरुपसङ्ख्यानम्" । २—"वयसि प्रथमे" । ३—"वयस्यचरम इति वाच्यम्" । ४—"द्विगोः" । ५—"अपरिमाण-विस्ताचित-कम्बल्येभ्यो न तद्धित-लुकि" । ६—"काण्डान्तात्क्षेत्रे" ७—"पुरुषात्प्रमाणेऽन्यतरस्याम्" । ८—"ऊधसोऽनङ्" "बहुव्रीहेरूधसो ङीष्" । ९—"सङ्ख्याऽव्ययादेर्ङीप्" । १०—"दाम-हायनान्ताच्च" । ११—"त्रिचतुर्भ्यां हायनस्य णत्वं वाच्यम्" "वयो वाचकस्यैव हायनस्य ङीप् णत्वं चेष्यते" । १२—"नित्यं सञ्ज्ञाछन्दसोः" । १३—"केवल-मामक-भागधेय-पापा-ऽपर-समानार्य-कृत-सुमङ्गल-भेषजाच्च" । १४—"अन्तर्वत्पति-वतोर्नुक्" । १५—"पत्युर्नो यज्ञसंयोगे" । १६—"विभाषा सपूर्वस्य" ।

पत्नियौ । पत्नियः
सपूर्वस्य किम् ? गवां पतिः स्त्री
सपत्नी[1] । एकपत्नी । वीरपत्नी
पूतक्रतायी[2]
वृषाकपायी[3] । अग्नायी
कुसितायी । कुसिदायी
मानवी[4], -मनायी, -मनुः
एनी[5], एता ।
रोहिणी, रोहिता
'श्येण्या शल्क्या चे'ति
अनुदात्तात्किम् ? श्वेता
शितिः स्त्री
पिशङ्गी[6], पिशङ्गा
असिता[7] । पलिता
असिक्नी[8] । पलिक्नी

तेन—'अवदाता'—इत्येव
कल्माषी[9] । सारङ्गी
अनुदात्तान्तात्किम् ? कृष्णा
कपिला
नर्तकी[10] । गौरी
अनडुही,[11] अनड्वाही
पिप्पली[12] । मत्सी[13] । दंष्ट्रा
जानपदी,[14] जानपदा
कुण्डी, कुण्डा । गोणी, गोणा
स्थली, स्थला
भाजी, भाजा । नागी, नागा
काली, काला
नीली, नीला, नील्या
नीली[15] । नीली[16] गौः
नीली,[17] नीला । कुशी, कुशा

---

१—"नित्यं सपत्न्यादिषु" । २—"पूतक्रतोरै च" 'इयं त्रिसूत्री पुंयोग एवेष्यते' । ३—"वृषा-कप्यग्नि-कुसित-कुसिदानामुदात्तः" । ४—"मनोरौ वा" । ५—"वर्णादनुदात्तात्तोपधातो नः" । ६—"पिशङ्गादुपसङ्ख्यानम्" । ७—"असित-पलितयोर्न" । ८—"छन्दसि क्नमेके" । ९—"अन्यतो ङीष्" । १०—"षिद्गौरा-दिभ्यश्च" । ११—"आमनडुहः स्त्रियां वा" । १२—"पिप्पल्यादयश्च" । १३—"सूर्य-तिष्या-ऽगस्त्य-मत्स्यानां य उपधायाः" "मत्स्यस्य ङ्याम्" "सूर्यागस्त्ययोश्छे च ङ्यां च" "तिष्य-पुष्ययोर्नक्षत्राणि यलोप इति वाच्यम्" । १४—जानपद-कुण्ड-गोण-स्थल-भाज-नाग-काल-नील-कुश-कामुक-कबराद्वृत्त्य-वपनाकृत्रिमा श्राणास्थौल्यवर्णानाच्छादनायोविकार-मैथुनेच्छाकेशवेशेषु" इति ङीष् । १५—"नीलश्चान्वक्तव्यः" "नीलादोषधौ" । १६—"प्राणिनि च" । १७—"सञ्ज्ञायां वा" ।

मुकी, कामुका
बरी, कबरा
णी,[1] शोणा
द्वी, मृदुः । पट्वी, पटुः
तः किम् ? शुचिः
णेति किम् ? आखुः
रुः पतिंवरा कन्या
ण्डुः । बह्वी, बहुः
त्रिः, रात्री
किटिः, शकटी
क्तिन्नर्थात्किम् ? अजननिः
द्धतिः, पद्धती । गोपी[7]
गोपालिका । अश्वपालिका
सूर्यस्य स्त्री देवता—सूर्या[9]
देवतायां किम् ? सूरी-कुन्ती
मानुषीयम्
इन्द्राणी[10] । हिमानी[11]

अरण्यानी
यवानी[12] । यवनानी[13]
मातुलानी,[14] मातुली
उपाध्यायानी, उपाध्यायी
उपाध्यायी,[15] उपाध्याया
आचार्यस्य स्त्री—आचार्यानी[16]
अर्याणी,[17] अर्या
क्षत्रियाणी, क्षत्रिया
पुंयोगे तु—अर्यी । क्षत्रियी
कथं ब्रह्माणीति ?
वस्त्रक्रीती[18]
क्वचिन्न—धनक्रीता
अभ्रलिप्ती[19] द्यौः
अल्पाख्यायां किम् ?
चन्द्रलिप्ता अङ्गना
ऊरुभिन्नी[20]
नेह—बहुकृता

१—"शोणात्प्राचाम्" । २—"वोतो गुणवचनात्" । ३—"खरुसंयोगोपधान्न" । ४—"बह्वादिभ्यश्च" । ५—"कृदिकारादक्तिनः" । ६—"सर्वतोऽक्तिन्नर्थादित्येके" । ७—"पुंयोगादाख्यायाम्" । ८—"पालकान्तान्न" । ९—"सूर्याद्देवतायां चाब्वाच्यः" । १०—"इन्द्र-वरुण-भव-शर्व-रुद्र-मृड-हिमारण्य-यव-यवन-मातुला-ऽऽचार्याणामानुक्" । ११—"हिमारण्योर्महत्त्वे" । १२—"यवाद्दोषे" । १३-"यवनाल्लिप्याम्" । १४—"मातुलोपाध्याययोरानुग्वा" । १५—"या तु स्वयमेवाध्यापिका तत्र वा ङीष् वाच्यः" । १६—"आचार्यादणत्वं च" । १७—"अर्यक्षत्रियाभ्यां वा स्वार्थे" । १८—"क्रीतात्करणपूर्वात्" । १९—"क्तादल्पाख्यायाम्" । २०—"बहुव्रीहेश्चान्तोदात्तात्" "जातिपूर्वादिति वक्तव्यम्" ।

दन्तजाता[1]
पाणिगृहीती, पाणिगृहीता[2]
सुरापीती, सुरापीता[3]
अन्तोदात्तात्किम् ? वस्त्रच्छन्ना
अतिकेशी, अतिकेशा[4]
चन्द्रमुखी, चन्द्रमुखा
संयोगोपधात्तु—सुगुल्फा
उपसर्जनात्किम् ? शिखा
[ सोभना शिखा—सुशिखा ]
सुस्वेदा[5]। सुज्ञाना
सुमुखा शाला। सुशोफा
सुकेशी, सुकेशा वा रथ्या[6]
सुस्तनी, सुस्तना वा प्रतिमा[7]
तुङ्गनासिकी, तुङ्गनासिकेत्यादि[8]
सहनासिका। अनासिका
स्वङ्गी, स्वङ्गेत्यादि[9]

सुपुच्छी[10], सुपुच्छा
कबरपुच्छी[11] मयूरी
[12]उलूकपक्षी शाला। उलूक-
पुच्छी सेना
कल्याणक्रोडा[13]। सुजघना
सकेशा[14]। अकेशा
विद्यमाननासिका
शूर्पणखा[15]। गौरमुखा
सञ्ज्ञायां किम् ? ताम्रमुखी कन्या
प्राङ्मुखी[16]
दित्यवाट्[17] च मे दित्यौही च मे
सखी[18]। अशिश्वी
'आधेनवो धुनयन्ताम शिश्वी'
तटी[19]। वृषली[20]
सत्यन्तं किम् ? शुक्ला
सकृदित्यादि किम् ? देवदत्ता

१—"जातान्तान्न"। २—"पाणिगृहीती भार्यायाम्"। ३—"अस्वाङ्गपूर्वपदाद्वा"। ४—"स्वाङ्गाच्चोपसर्जनादसंयोगोपधात्"। ५—"अद्रवं मूर्तिमत्स्वाङ्ग प्राणिस्थम-विकारजम्"। ६—"अतत्स्थं तत्र दृष्टं च"। ७—"तेन चेत्तत्तथा युतम्"। ८—"नासिकोदरौष्ठ जङ्घा दन्त-कर्ण-शृङ्गाच्च"। ९—"अङ्ग-गात्र कण्ठेभ्यो वक्तव्यम्"। १०—"पुच्छाच्च"। ११—"कबरमणिविषशरेभ्यो नित्यम्"। १२—"उपमानात्पक्षाच्च पुच्छाच्च"। १३—"न क्रोडादिबह्वचः"। १४—"सहनञ्विद्यमानपूर्वाच्च"। १५—"नखमुखात्सञ्ज्ञायाम्"। १६—"दिक्पूर्वपदान्ङीप्"। १७—"वाहः"। १८—"सख्यशिश्वीति भाषायाम्"। १९—"जातेरस्त्रीविषयादयोपधात्" "आकृति-ग्रहणाजातिः"। २०—"लिङ्गानां च न सर्वभाक्—सकृदाख्यातनिर्ग्राह्या"।

औपगवी[1] । कठी । बह्वृची
'ब्राह्मणी'त्यत्र
जातेः किम् ? मुण्डा
अस्त्रीविषयात्किम् ? बलाका
अयोपधात्किम् ? क्षत्रिया
हयी[2] । गवयी । मुकयी
मनुषी[3] । मत्सी[4]
ओदनपाकी[5] शङ्कुकर्णी
शालपर्णी । शङ्खपुष्पी
दासीफली । दर्भमूली । गोवाली
दाक्षी[6] । औदमेयी
मनुष्येति किम् ? तित्तिरिः
कुरूः[7]
अयोपधात्किम् ? अध्वर्युः ब्राह्मणी

अलाब्वा[8] । कर्कन्ध्वा
कृकवाकुः । रज्जुः । हनुः
भद्रबाहूः[9]
सञ्ज्ञायां किम् ? वृत्तबाहुः
पङ्गूः[10] । श्वश्रूः[11]
करभोरूः[12] । संहितोरूः[13]
सफोरूः । लक्षणोरूः
वामोरूः । सहितोरूः[14] । सहोरूः
[15]कद्रूः । कमण्डलूः
सञ्ज्ञायां किम् ? कद्रुः । कमण्डलुः
शार्ङ्गरवी[16] । वैदी । नारी[17]
अम्बष्ठ्या[18] । कारीषगन्ध्या
पौतिमाष्या[19] । आवट्या[20]
युवतिः[21] । बहुयुवा । युवती

इति पण्डितश्रीशिवदत्तमिश्रशास्त्रिसङ्कलितायां सोत्तरा–सिद्धान्तकौमुदीस्थ-प्रयोगसूच्यां स्त्रीप्रत्ययप्रकरणम् ।

१–"गोत्रं च चरणैः सह" । २–"योपधप्रतिषेधे हय-गवय-मुकय-मनुष्य-मत्स्यानामप्रतिषेधः"। ३–"मनोर्जातावञ्यतो षुक् च" । ४–"मत्स्यस्य ङ्याम्"। ५–"पाक-कर्ण-पर्ण-पुष्प-फल-मूल-वालोत्तरपदाच्च" । ६–"इतो मनुष्यजातेः । ७–"ऊङुतः" । ८–"अप्राणिजातेश्चारज्ज्वादीनामुपसङ्ख्यानम्" । ९–"बाह्वन्तात्सञ्ज्ञायाम्" । १०–"पङ्गोश्च" । ११–"श्वशुरस्योकाराऽकारलोपश्च" । १२–"ऊरूत्तरपदादौपम्ये" । १३–"संहित-शफ-लक्षण-वामादेश्च" । १४–"सहित-सहाभ्यां चेति वक्तव्यम्" । १५–"सञ्ज्ञायाम्" । १६–"शार्ङ्गरवाद्यञो ङीन्" । १७–"नृ नरयोर्वृद्धिश्च" । १८–"यङश्चाप्" । १९–"षाच्चश्चाव् वाच्यः" । २०–"आवट्याच्च" । २१–"यूनस्तिः" इति 'ति'प्रत्ययः । इति प्रथमखण्डम् ।

* श्रीः *

# ❀ अथ प्रश्नपत्रसंग्रहः ❀

—o—

## सन् १९४१

### सिद्धान्तकौमुद्यां प्रश्नाः—

१—'वृद्धिरादैच्' इत्यनेन यथा वृद्धिसंज्ञा विधीयते तथा 'अणुदित्सवर्णस्य चाऽप्रत्ययः', 'येन विधिस्तदन्तस्य' इति सूत्राभ्यां का का संज्ञा विधीयते इत्युक्त्वा दशार्णः, चिनुही ३ इति, दधिँ, यल्लोकम्, चक्रिँत्रायस्व, भो लक्ष्म, एषु स-सूत्रं सन्धिकार्य्यं ब्रूत । १०

२—'पद्दन्नोमास्–' इति सूत्रे 'प्रभृतिग्रहणं प्रकारार्थम्' इति पङ्क्तिं फलप्रदर्शनपूर्वकं संक्षेपतो व्याख्याय-क्षाम्युः, पूतः, आसानि, सुनूनि, एतानि अर्थप्रदर्शनपुरस्सरं साधयत । १०

३—स्त्रीप्रत्ययविधायकानाम् 'अजाद्यतष्टाप्' इत्यादीनां, विभक्तिविधायकानाम् 'कर्मणि द्वितीया' इत्यादीनाञ्च सूत्राणां कस्मिन्नध्याये पाठ इति लिखित्वा कौमुद्यामपठितौ कस्कादिगणस्थौ गौरादिगणस्थौ च द्वौ द्वौ शब्दौ प्रदर्शनीयौ । १०

४—अत्रावा, गङ्गाका, भेषजी, पौतिमाष्या, ओदनं भुञ्जानो विषं भुङ्क्ते, लक्ष्मीर्हरिं प्रति, अध्ययनेन वसति, विप्राय गां प्रतिशृणोति, मातुर्निलीयते, अधिभुवि रामः, एतेषु स-सूत्रनिर्देशं विशेषकार्यं प्रदर्शनीयम् । १०

५—युष्मानतिक्रान्त इति विग्रहे अतियुष्मच्छब्दात्सौ, अमुमञ्चतीति विग्रहे अदस्-अञ्च् इति स्थिते सौ च रूपं संसाध्य 'पद्दन्नोमास्हृन्निशसन्यूषन्दोषन्यकञ्छकन्नुदन्नासञ्छस्प्रभृतिषु' इत्यत्र पदच्छेदं कुरुत । १०

६—'पुंयोगादाख्यायाम्', 'क्रियार्थोपपदस्य च कर्मणि स्थानिनः' इत्यनयोः सूत्रयोरर्थमभिधाय, स्पृक्, कथं त्वां मां वा न रक्षेत्, मत्सी, पञ्चकृत्वोऽह्नो भोजनम्, नेतव्या व्रजं गावः कृष्णेन, केषां सूत्राणाम् इमान्युदाहरणानि मूले दत्तानीति लिखत । १०

सूचना—एषु यथेच्छं पञ्च समाधेयाः ।

—*—

१९४२

सूचना—एषु यथेच्छं पञ्च प्रश्नाः समाधेयाः।

१—'नाऽऽज्झलौ' इति सूत्रस्य शङ्कासमाधानपूर्वकं फलं प्रदर्श्य, हर्यनुभवः, विष्णो इति, उत्थानम्, नॄँ≍पाहि, धूर्पतिः, एतेषु प्रयोगेषु सूत्रनिर्देशपुरस्सरं सन्धिकार्यं लिखत। १०

२— रामाणाम्, दता, बहुश्रेयस्यै, निच्क्षु, अतिस्त्रियै, एषु शङ्कासमाधानेन समं विशेषकार्य्यं स्पष्टं वदत। १०

३—सुलुना, मघोनः, समीचः, गवाङ्, जीवसे, अत्र ससूत्रं प्रधानकार्यं कथयित्वा, एषामर्था वक्तव्याः। १०

४—( क ) प्राची, पञ्चतयी, अग्नायी, अश्वलिही, मुकयी, एषु केन कः स्त्रीप्रत्ययः?

( ख ) "वक्ष्यमाणेत्यत्र टित्वादुगित्वाच्च ङीप्प्राप्तः" इति फक्किका विशदं व्याख्येया। १०

५—( क ) अविनीतं विनयं याचते, लक्ष्मीर्हरिम्प्रति, अक्षान् दीव्यति, फलेभ्यो याति, दक्षिणा ग्रामात्, आयुष्यं कृष्णाय, गच्छतां गच्छत्सु वा यावन् शीघ्रः उपपरार्धे हरेर्गुणाः, एतेषु प्रयोगेषु प्रत्येकं सूत्रेण साकं कारकविभक्तिं दर्शयत।

( ख ) 'अङ्गस्य', 'पञ्चमी विभक्तेः' इमे सूत्रे कस्मिन्नध्याये स्तः?

६—( क ) टोः किं सर्पिष्टमम्।

( ख ) बहुवचने किं रामः। रामस्य।

( ग ) पूर्वस्य किं परस्य मा भूत् कटुका।

( घ ) परिमाणमात्रे द्रोणो व्रीहिः।

आसु फक्किकासु केचन द्वे सुस्पष्टं व्याख्येये। १०

---

१९४३

१—( क ) उपेडकीयति, अग्नी ३ इति, चेच्छिद्यते, गीःकाम्यति, भो अच्युत, एषु ससूत्रं सन्धिकार्य्याणि लिखत। ५

( ख ) "कुर्वन्तीत्यत्र णत्वे प्राप्ते ,तस्याऽसिद्धे"ति ग्रन्थस्येह लेखनस्याशय-

मुपवर्ण्य, "लृवर्णस्य द्वादश तस्य दीर्घाभावात्" "इहोभयत्रापि विधेयं वर्णद्वयं द्विमात्रम्" अनयोर्लेखयोः परस्परविरोधं परिहरत । ५

२—वर्णाश्रमेतराणाम्, यूष्णः, सुसखिना, दुर्धियः, हे अम्बिके, अतिस्त्रियै, हे वारे, प्ररीणाम्, एष्वादितोऽन्ततो वा पञ्च प्रयोगान् स-शङ्कासमाधि साधयत । १०

३—वृत्रघ्नः, यूनः, अष्टौ, अतित्वाकम्, अदद्यङ्, गोमान्, असृक्, अत्युच्चैसौ, एषु कांश्चित् पञ्च प्रयोगान् साधु साधयत । १०

४—( क ) इत्वरी, नागी, ऊरुभिन्नी, कारीषगन्ध्या, नारी, एषु स्त्रीप्रत्ययविधायकानि सूत्राणिं पदच्छेदपुरःसरं लिखत । ५

( ख ) "ऊधसोऽनङ्" "आदाचार्य्याणाम्" इति सूत्रद्वयस्याऽध्यायादि निर्दिश्य "त्र्येण्या च शलल्येति गृह्यसूत्रमि"ति मूलोक्तेराशयं लिखत । ५

५—भक्तो विष्णुम्प्रति, अक्षान् दीव्यति, कृष्णाय ईक्षते, चैत्रात्पूर्वः, अधि राज्ञि राज्यम्, अत्र विभक्तिविधायकानि विलिख्य "कर्तृकर्मणो"रिति सूत्रे कृद्ग्रहणं सफलयत । १०

—:०:—

सन् १९४४

१—'हलन्त्यम्' सूत्रस्य वाक्यार्थद्वयं स-प्रयोजनमुपवर्ण्य 'इ,क,ठ,श,ह'काराणां स्थानानि बाह्यप्रयत्नांश्च स-प्रमाणं लिखत । १०

२— उपार्च्छति, हरी एतौ, वाग्घरिः, चेच्छिद्यते, पुरः प्रवेष्टव्याः, स्वः कामः, भो अच्युत, असः शिवः, एषां पञ्चसु केषुचिदुदाहरणेषु ससूत्रं सन्धिकार्यतदभावौ यथायथं लिखत । १०

३—रामाणां, माभ्यां, नियां, जरसां, क्रौं, पुनर्भ्वाम्, उदानि, प्ररीणाम्, एषु कानिचित् पञ्च रूपाणि साधयत । १०

४—चतुर्षु, मघोनः, प्रियाष्ट्ना, दिक्षु, अमुष्यै, बेभिदि, पिपठिषि, एषु पञ्चानां सिद्धिप्रकारं लिखत । १०

५— उदेतोः, द्विपदी, अजिका, द्विबिस्ता, ऊरुभिन्नी, एषु विशेषकार्य्याणि अविकलसूत्रोपन्यासेन प्रदर्शयत । १०

—*—

सन् १९४५

१ वर्षे १ पत्रम्।

सिद्धान्तकौमुद्याः स्त्रीप्रत्ययान्तभागे प्रश्नाः—

१—हलामर्धमात्रिकत्वेन वां काल इव कालाभावाद् व्यावर्त्याभावेन, ऊकालोऽज्झ्रस्वदीर्घप्लुत इति सूत्रेऽज्ग्रहणस्य। परः सन्निकर्षः संहिता, अचश्चेत्यनयोः सूत्रयोश्च किं फलम्। कुत्र चोपकारकत्वमेषामिति लक्ष्यप्रदर्शनं कुरुत। १०

अथवा

विश्वपाभिरित्यत्र कथं दत्वाशङ्का ?, कथञ्च तद्वारणमिति स्पष्टं लिखत।

२—गव्यूतिः, कृष्णर्द्धिः, होत्लृकारः, देवदत्त, विति, पुँस्पुत्रः, नॄँः पाहि, द्विष्करोति, स उ एकाग्निः, अहरहः, एषु साधकसूत्रपुरःसरं षट् समाधेयाः। १०

३—मत्कपितृकः, द्व्यहि, सुसखिना, प्रियत्रि, अतित्रिणः, अजरसम्, वारोणाम्। एषु पञ्चैव साधनीयाः। १०

४—अनड्वान्, राज्ञः, पन्थाः, अमुमुईचः, विविट्, सेदुषः, असुकः, एषु केचन पञ्चैव सम्यक् साधनीयाः। १०

५—बहुराज्ञो, गङ्गिका, अत्यूध्नी, सुकेशी, सखी, श्वश्रूः, सहोरूः, युवती, एषु केचन पञ्च साधनीयाः। सर्वत्र वैकल्पिकं रूपं लेखनीयम्। १०

—०—

पण्डितश्रीशिवदत्तमिश्रशास्त्रिकृतः—

## ❀ प्रश्नोत्तरलेखनप्रकारः ❀

प्रश्नः [ १ ] हलामर्धमात्रिकत्वेनेति।

ननु "ऊकालोऽज्झ्रस्व-दीर्घ-प्लुतः" इति सूत्रेऽज्ग्रहणं किमर्थम् ?

न चाऽजिति वर्णग्रहणे कृते जातिग्रहणस्य दुर्वारत्वात् 'तितउच्छत्रम्' इत्यत्र "दीर्घात्पदान्ताद्वा" इति सूत्रेण तुगापत्तिरिति चेन्न ?, ज्ञापकसिद्धत्वेन तस्याऽसार्वत्रिकत्वात्। अन्तरङ्गत्वेन ह्रस्वत्वनिमित्तमित्यतुक एव प्राप्तेश्च। अज्ग्रहणं तु 'प्रतक्ष्य' 'प्ररक्ष्य' इत्यादौ "ह्रस्वस्य पिति कृति तुक्" इति सूत्रेण तुग्व्यावृत्त्यर्थमिति शम्।

परः सन्निकर्षः संहिता।

एतत् सूत्रसहकारादेव 'सुध्युपास्यः' 'मद्ध्वरिः' इत्यादिप्रयोगेषु यणादिसन्धिकार्यं भवतीति बोद्धयम्।

अचश्च ।

पूर्वोक्तसूत्रसामर्थ्यादेव 'भवामि' 'भविष्यामि' इत्यादौ 'भव' इति समुदायमात्रस्याऽङ्गसंज्ञात्वेऽपि "अतो दीर्घो यञि" इति सूत्रेण दीर्घो भवतीति ज्ञेयम् ।

प्रश्नः [ २ ] गव्यूतिः।

'गो + यूति' रित्यवस्थायां "अध्वपरिमाणे च" इत्यध्वनः परिमाणे वाच्ये "गोर्यूतौ छन्दस्युपसंख्यानम्" इत्यनेनाऽवादेशे कृते 'गव्यूतिः' इति रूपं सिद्धम् ।

ननु 'गव्यम्' 'नाव्यम्' इत्यादौ भसंज्ञया पदसंज्ञाया बाधात् "लोपः शाकल्यस्य" "हलि सर्वेषाम्" इत्यनेन वा वलोपाऽभावेऽपि 'गव्यूति'रित्यत्राऽन्तर्वर्त्तिनीं विभक्तिमाश्रित्य पदत्वाद्भत्वाऽभावाच्च वलोपः स्यादेवेति चेन्न ?, "वान्तो यि प्रत्यये" इति सूत्रे वकारात् "गोर्यूतौ छन्दस्युपसंख्यानम्" इत्यत्र छकाराद्वा पूर्वभागे "लोपो व्योर्वलि" इति लोपेन वकारः प्रश्लिष्यते, तस्य च विशेषणत्वात्तदन्तविधौ वकारान्त इत्यर्थो लभ्यते । तत्र वान्तस्य पुनर्वान्तवचनसामर्थ्याच्छ्रूयमाणवकारवान् वान्त आदेशः स्यादिति लभ्यते । तेन श्रूयमाणे वकारादेशे तात्पर्यस्य विद्यमानतया लोप इत्यलम् ।

कृष्णर्द्धिः ।

'कृष्ण + ऋद्धि'रिति स्थिते "स्थानेऽन्तरतमः" "उरण्रपरः" इत्यनयोः सहकारात् "आद्गुणः" इति गुणेनारि "अचो रहाभ्यां द्वे" इति सूत्रेण द्वित्वे "झरो झरि सवर्णे" इत्यनेन लोपे कृतेऽनयोर्विकल्पे च त्रीणि रूपाणि सिद्ध्यन्ति । तान्युक्तानि मूले–द्वित्वाऽभावे लोपे सत्येकधम्, असति लोपे द्वित्व लोपयोर्वा द्विधम्, सति द्वित्वे लोपे चाऽसति त्रिधमिति ।

होत्लृकारः ।

'होतृ + लृकारः' इत्यवस्थायां ऋकारस्य लृकारस्य च स्थाने "ऋति सवर्णे लृ वा" इत्यनेन लृकारादेशे कृते 'होत्लृकारः' इति रूपं सिद्ध्यति ।

देवद३त्त ।

अत्र "गुरोरनृतोऽनन्त्यस्याऽप्येकैकस्य प्राचाम्" इति सूत्रेण वैकल्पिके प्लुतसंज्ञात्वे "प्लुतप्रगृह्या अचि नित्यम्" इत्यनेन प्रकृतिभावे च कृते 'देवद३त्त' इति रूपं निष्पन्नम् ।

## विति

'उ + इति' इत्यवस्थायां "निपात एकाजनाङ्" इति सूत्रेण नित्यं निपातसंज्ञात्वे प्राप्ते, तम्प्रबाध्य "उञः" इति वैकल्पिके प्रगृह्यत्वे "प्लुतप्रगृह्या अचि नित्यम्" इति प्रकृतिभावे च कृते 'उ इति' रूपम्। प्रगृह्यसंज्ञाविधानाऽभावपक्षे प्रकृतिभावोऽपि न। ततो यणि कृते 'विति' इति रूपं निष्पन्नम्।

## अहरहः।

अत्र "नित्यवीप्सयोः" इत्यनेन द्वित्वे 'अहन् + अहन्' इत्यवस्थायां "रोऽसुपि" इति सूत्रेण रुत्वेऽन्त्यस्य द्वितीयरेफस्य विसर्गे च कृते 'अहरहः' इति रूपं साधु।

## प्र० [ ३ ] मत्कपितृकः।

"न बहुव्रीहौ" इत्यत्र 'अहकं पिता यस्य स' इति लौकिकविग्रहवाक्ये 'अस्मद् + सु' 'पितृ + सु' इत्यलौकिकविग्रहवाक्ये च अस्मच्छब्दस्य सर्वनामत्वात्समासात्पूर्वमेव अलौकिकविग्रहवाक्ये एव "अव्ययसर्वनाम्नामकच्प्राक्टेः" इति सूत्रेणाऽकच् स्यात्, स चाऽकच् समासस्याऽनन्तरमपि श्रूयेत। अलौकिकविग्रहवाक्ये श्रुतस्य लौकिकविग्रहवाक्ये समासे च श्रवणनियमात्। यथा—अतिक्रान्तो भवन्तमिति विग्रहे समासे भवच्छब्दार्थस्य स्वोपक्रान्तार्थान्तरप्रधानतयोपसर्जनत्वेऽप्यलौकिकविग्रहेऽनुपसर्जनत्वाद्भवच्छब्दस्य सर्वनामसंज्ञायाम् "अव्ययसर्वनाम्नामकच्प्राक्टेः" इत्यकचि, अतिक्रान्तो भवकन्तमिति लौकिकविग्रहेऽतिभवकानिति। ततश्च 'मत्कपितृकः' इति साऽकच्कं रूपं युक्तं न स्यात्। अस्मात्कारणात् "न बहुव्रीहौ" इत्यनेन सर्वनामसंज्ञाप्रतिषिध्यते। तेनाऽकचोऽभावे "प्रत्ययोत्तरपदयोश्च" इति मादेशे, "नद्यृतश्च" इति कपि च कृते 'मत्कपितृकः' इतीष्टं रूपं भवतीति सूत्रकारीयमतम्। भाष्ये तु—

"अकच्स्वरौ तु कर्त्तव्यौ प्रत्यङ्गं मुक्तसंशयौ" इत्युक्तेः 'मत्कपितृकः' इति रूपे इष्टापत्तिं कृत्वा प्रत्याख्यातमेतत्सूत्रम्। न चोभयपक्षेऽपि विरोधः स्यादिति वाच्यम् ?, यथोत्तरं मुनीनां प्रामाण्यादिति शम्। एवञ्चाऽत्र भाष्यकारोक्तव्यवस्थैव प्रामाण्यमिति दिक्।

## द्व्यह्नि।

द्वयोरह्नोर्भव इति लौकिकविग्रहे 'द्वि + ओस्, अहन् + ओस्' इत्यलौकिकवि-

ग्रहे च "तद्धितार्थोत्तरपदसमाहारे च" इत्यनेन समासे, सुब्लुकि "कालाट्ठञ्" इति सूत्रेण 'ठञ्' प्रत्यये, "द्विगोर्लुगनपत्ये" इति ठञो लुकि "राजाऽहः सखिभ्यष्टच्" इति टचि "अह्नोऽह्न एतेभ्यः" इत्यनेनाऽह्नादेशे कृते 'द्व्यह्नः' इति रूपम्। ततो 'द्व्यह्न' शब्दात् "सङ्ख्या-विसायपूर्वस्याऽह्नस्याऽहनन्यतरस्यां ङौ" इत्यनेनाऽहन्नादेशे "विभाषा ङिश्योः" इति सूत्रेण वैकल्पिकेऽकारलोपे च कृते "द्व्यह्नि' इति रूपम्; अल्लोपाऽभावपक्षे-'द्व्यहनि' इति। अहन्नादेशाभावे-'द्व्यह्ने' इति रूपत्रयं भवति।

सुसखिना।

शोभनः सखा यस्येति विग्रहे, समासादिकार्ये कृते निष्पन्न-'सुसखि'-शब्दात् 'टा'विभक्तौ "शेषो घ्यसखि" इति सूत्रेऽसखीति निषेधाप्रवृत्तेर्घिसंज्ञायाम् "आङो नाऽस्त्रियाम्" इति नात्वे 'सुसखिना' इति रूपं सिद्धम्।

प्रियत्रि।

प्रियास्तिस्रो यस्य तदिति विग्रहे समासादिकार्ये; ततो निष्पन्न-'प्रियत्रि'-शब्दात्सौ, तस्य 'प्रियत्रि' शब्दस्य नपुंसकत्वात् "स्वमोर्नपुंसकात्" इत्यनेन लुकि 'प्रियत्रि' इति रूपं सिद्धम्।

अत्र 'त्रि'शब्दस्य स्त्रीलिङ्गत्वेन तिसृभावस्तु न शङ्क्यः!, स्वमोर्लुका लुप्तत्वेन प्रत्ययलक्षणाभावात्। "न लुमताङ्गस्य" इति निषेधस्याऽनित्यत्वात्पक्षे प्रत्ययलक्षणत्वेन तिस्रादेशे कृते 'प्रियतिसृ' इति च रूपं सिद्ध्यतीति शम्।

वारीणाम्।

प्रातिपदिकसंज्ञक-'वारि'शब्दस्य षष्ठीबहुवचने आमि 'वारि+आम्' इति स्थिते प्राप्तं नुटं परत्वाद्बाधित्वा "इकोऽचि विभक्तौ" इत्यनेन नुमि प्राप्ते, तमपि प्रबाध्य "ह्रस्वनद्यापो नुट्" "नुमचिरतृज्वद्भावेभ्यो नुट् पूर्वविप्रतिषेधेन" इति नुटि, ततो 'वारि+नाम्' इत्यवस्थायां "नामि" इति सूत्रेण दीर्घे, ततो णत्वे 'वारीणाम्' इति रूपं साधु।

प्र० [ ४ ] अनड्वान्।

प्रातिपदिकसंज्ञकाद् 'अनडुह'शब्दात्सौ "चतुरनडुहोरामुदात्तः" इत्यनेनाऽऽमि "इको यणचि" इत्यनेन यणि "सावनडुहः" इति नुम्यनुबन्धलोपे 'अनड्वान्+ह्+स' इति स्थिते, "हल्ङ्याब्भ्यो-" इति लोपे, हकारस्य संयो-

गान्तलोपे च कृते 'अनड्वान्' इति रूपं निष्पन्नम् । न च हकारस्य संयोगान्तलोपे कृते नलोपः कुतो नेति चेन्न ?, संयोगान्तलोपस्याऽसिद्धत्वात् । एवञ्च "वसु-स्रंसु-ध्वंस्वनडुहां दः" इति सूत्रेण दत्वमपि न शङ्क्यः ?, नुम्विधानसामर्थ्यादिति दिक् ।

अत्र विशेषविहितेन नुमा सामान्यविहितस्याऽऽमः "तक्रकौण्डिन्य" न्यायेन बाधात्कथमामिति न शङ्क्यम् ?, "आच्छीनद्योर्नुम्" इति सूत्रात्–आदित्यनुवृत्त्या 'अनडुह्' शब्दस्यान्त्यावर्णात्परो नुमित्यर्थे उपजीव्यविरोधेनाऽबाधादिति दिक् ।

राज्ञः ।

'राजन्'शब्दाद् द्वितीयाबहुवचनविवक्षायां 'शस्' विभक्तौ 'राजन् + अस्' इति स्थिते भसंज्ञायाम् "अल्लोपोऽनः" इति सूत्रेणाऽनोऽकारस्य लोपे, श्चुत्वेन ञकारे, ज्ञोर्ज्ञत्वे, रुत्व-विसर्गयोश्च सतोः 'राज्ञः' इति रूपं सिद्धम् ।

नन्वत्र "अचः परस्मिन्पूर्वविधौ" इत्यल्लोपस्य पूर्वस्मादपि विधौ स्थानिवत्त्वात् श्चुत्वं न स्यादिति चेन्न ?, "पूर्वत्राऽसिद्धीये न स्थानिवत्" इति परिभाषया त्रैपादिकत्वेनाऽसिद्धे श्चुत्वे कर्त्तव्ये स्थानिवद्भावनिषेधात् । न चाऽन्तरङ्गे श्चुत्वे कर्त्तव्ये बहिरङ्गस्याऽल्लोपस्याऽसिद्धत्वात् कथं श्चुत्वमिति वाच्यम् ?, यथोद्देशपक्षे षाष्ठीं परिभाषां प्रति श्चुत्वस्याऽसिद्धतया परिभाषाया एवाऽप्राप्तेः । "वाह ऊठ्" इत्यत्रोठ्ग्रहणेन ज्ञापितत्वादियं षाष्ठीपरिभाषेति दिक् ।

पन्थाः ।

प्रातिपदिकसंज्ञकात् 'पथिन्' शब्दात्सौ विभक्तौ समागतायां सत्यां "पथिमथ्यृभुक्षामात्" इति सूत्रेण नकारस्याकारे "इतोऽत्सर्वनामस्थाने" इतीकारस्याऽऽत्वे 'पथ् + आ + स्' इति स्थिते "थो न्थः" इत्यनेन थकारस्य न्थादेशे 'पन्थ + आ + स्' इति जाते, सवर्णदीर्घे, रुत्वे विसर्गे च कृते 'पन्थाः' इति रूपं सिद्धम् ।

अमुमुईचः ।

'अदस् × अञ्च्' इति स्थिते क्विनि, उपपदसमासे, सुब्लुकि च कृते "अनिदितां हल उपधायाः क्ङिति" इत्यनेन नलोपे कृते "विष्वग्देवयोश्च" इत्यदसष्टेरद्र्यादेशे 'अदद्रि + अच्' इति स्थिते, ततः शसि विभक्तावनुबन्धलोपे "अदसोऽसेर्दादुदो मः" इति प्रथमदकारस्य मत्वे, अकारस्योत्वे, द्वितीयदकारस्य मत्वे,

तदुत्तरस्य रेफस्योत्वे च कृते 'अमुमु+इ+अच्+अस्' इति स्थिते "अचः" इति लोपेन यण्निमित्तस्याऽकारस्य विनाशोन्मुखत्वात् "अकृतव्यूहा" इति परिभाषयाऽन्तरङ्गोऽपि यणादेशो लोपविषये न प्रवर्त्तत इति सिद्धान्तात्, "चौ" इति सूत्रारम्भसामर्थ्याद्वा यणादेशाऽभावे दीर्घे च कृते 'अमुमुईचः' इति रूपं सिद्ध्यति।

## विविट्।

वेष्टुमिच्छतीति विग्रहे 'विश्'धातोः 'सन्' प्रत्यये "हलन्ताच्च" इति सूत्रेण सनः कित्त्वात् "पुगन्तलघूपधस्य च" इति गुणाभावे "सन्यङोः" इति द्वित्वे, हलादिशेषे "व्रश्च-भ्रस्ज-सृज-मृज-यज-राज-भ्राजच्छशां षः" इत्यनेन शकारस्य षत्वे "षढोः कः सि" इति षस्य कत्वे, सस्य षत्वे, क-ष-संयोगे क्षत्वे "सनाद्यन्ता धातवः" इति धातुत्वात् क्विपि, क्विपो लोपे च कृते 'विविक्ष' शब्दो सिद्धः। तस्मात् 'विविक्ष'शब्दात् सौ विभक्तौ समागतायां सत्यां हल्ङ्यादिलोपे, संयोगान्तलोपे, ततः सकारस्य निमित्तस्य निवृत्त्या ककारस्यापि निवृत्तौ, झल्परत्वनिवृत्त्या पूर्वप्रवृत्तषत्वस्याऽपि निवृत्तौ, "व्रश्च-भ्रस्ज-"इत्यादिना षत्वे, तस्य जश्त्वेन डकारे, तस्य चर्त्वेन टकारे च कृते सति 'विविट्' इति रूपं सिद्ध्यति। चर्त्वाऽभावपक्षे—'विविड्' इति रूपम्।

ननु 'विविक्ष' इति स्थितौ संयोगान्तलोपात्पूर्वमेव "स्कोः संयोगाद्योरन्ते च" इति ककारलोपः कुतो नेति चेन्न!, संयोगादिलोपे कृते "षढोः कः सि" इति कत्वस्याऽसिद्धत्वादिति दिक्।

## प्रश्नः [ ५ ] बहुराज्ञी।

बहवो राजानो यस्या सेति विग्रहे 'बहुराजन्' शब्दात् स्त्रीत्वविवक्षायां सौ विभक्तौ "अन उपधालोपिनोऽन्यतरस्याम्" इत्यनेन वैकल्पिके 'ङिप्' प्रत्यये, ततोऽकारलोपे, हल्ङ्यादिलोपे, श्चुत्वे च विहिते 'बहुराज्ञी' इति रूपं निष्पन्नम्। पक्षे—"डाबुभाभ्यामन्यतरस्याम्" इत्यनेन वैकल्पिके 'डाप्' प्रत्यये कृते 'बहुराजा' इति रूपम्। डापोऽभावपक्षे—"अनो बहुव्रीहेः" इत्यनेन ङीब्निषेधे "सर्वनामस्थाने चाऽसम्बुद्धौ" इति दीर्घे, सोर्लोपे, नकारलोपे च सति 'बहुराजा' इति रूपं सिद्ध्यति। यद्यप्यत्र ङीब्निषेधे च सौ 'बहुराजा' इति समानमेव रूपं भवति। परञ्च औङि डाप्प्रत्यये कृते 'बहुराजे' तथा ङीब्निषेधपक्षे-'बहुराजानौ' इति विशेषो ज्ञेयः।

## गङ्गिका ।

'गङ्गा' शब्दात् 'क' प्रत्यये "केऽणः" इत्यनेन ह्रस्वे, स्त्रियामदन्तत्वाट्टापि "अभाषितपुंस्काच्च" इत्यनेन वैकल्पिके इत्त्वे सोर्लोपे च कृते 'गङ्गिका' इति । इत्त्वाऽभावपक्षे 'गङ्गका' इति रूपद्वयं सिद्ध्यति ।

## अत्यूध्नी ।

अतिशयितमुधो यस्या इति विग्रहे बहुव्रीहिसमासे, सुपो लुकि "ऊधसोऽनङ्" इत्यनेनाऽनङि "संख्ययाऽव्ययादेर्ङीप्" इति 'ङीप्' प्रत्यये, भसंज्ञायां भत्वादकारस्य लोपे, ततः प्रातिपदिकत्वे स्वादिकार्ये च कृते 'अत्यूध्नी' इति रूपं सिद्धम् । अत्र "संख्याऽव्ययादेर्ङीप्" इति सूत्रे बहुव्रीहेरित्यनुवर्तनात् ऊधोऽतिक्रान्तेति विग्रहे "अत्यादयः क्रान्ताद्यर्थे द्वितीयया" इत्यनेन समासे कृतेऽबहुव्रीहित्वात् 'अत्यूधाः' इत्येव रूपं भवतीति बोद्धव्यम् ।

## सुकेशी ।

"स्वाङ्गाच्चोपसर्जनात्" इत्यस्मिन् सूत्रे स्वाङ्गं त्रिधा भवति । तथा— (१) "अद्रवं मूर्त्तिमत्स्वाङ्गं प्राणिस्थमविकारजम्" । (२) "अतत्स्थं तत्र दृष्टं च" (३) "तेन चेत्तत्तथा युतम्" ।- तत्र द्वितीयलक्षणस्याऽयमर्थः—सम्प्रति प्राणिस्थत्वाभावेऽपि प्राणिनि यत् दृष्टं तदपि स्वाङ्गमिति । अतः 'सुकेशी सुकेशा वा रथ्या' इत्यत्र केशस्य सम्प्रति प्राणिस्थत्वाभावेऽपि प्राणिनि दृष्टत्वेन स्वाङ्गत्वात् ङीषसिद्धः । पक्षे 'सुकेशा' इति रूपं सिद्ध्यति ।

## सखी ।

प्रातिपदिकसंज्ञक—'सखि'—शब्दात् "सख्यशिश्वीति भाषायाम्" इति 'ङीष्' प्रत्यये स्वादिकार्ये च 'सखी' इति रूपं निष्पन्नम् ।

इति पण्डितशिवदत्तमिश्रशास्त्रिकृतः
प्रश्नोत्तरलेखनप्रकारः समाप्तः ।

—०—

सूचना—अत्र प्रश्नपत्रे प्रश्नकर्तुर्नियमानुसारेण ग्रन्थविस्तरभिया च पृष्टानां षट्, पञ्च वा प्रयोगाणामेवोत्तरं प्रदत्तम् । समेषामुत्तरं जिज्ञासुभिश्छात्रैर्मत्कृतायां सोत्तरा-मध्यमा-प्रथमखण्डप्रश्नावल्यां द्रष्टव्यम् ।

## पण्डित 'श्रीशिवदत्तमिश्रशास्त्रि' सङ्कलितानि
## परीक्षोपयोगिपुस्तकानि

—•—

(१) सोत्तरा-सिद्धान्तकौमुदीस्थप्रयोगसूची—प्रश्नोत्तरलेखन-प्रकारसहिता (प्रथमखण्डम्) ॥=)
(२) „ „ „ (द्वितीयखण्डम्) [illegible])
(३) „ „ „ (तृतीयखण्डम्) ॥)
(४) „ „ „ (चतुर्थखण्डम्) ॥)
(५) „ „ स्वरवैदिक-प्रयोगसूची-प्रश्नपत्रसहिता यन्त्रस्था
(६) सोत्तरा-लघुकौमुदीस्थप्रयोगसूची-प्रश्नोत्तरलेखनप्रकारसहिता ॥)
(७) सोत्तरा-प्रथमा-प्रश्नावली—गवर्नमेण्टसंस्कृतकालेजस्य प्रश्नपत्राणामुत्तराणि १)
(८) सोत्तरा-मध्यमा-प्रश्नावली— „ „ (प्रथमखण्डम्) यन्त्रस्था
(९) „ „ „ (द्वितीयखण्डम्) १)
(१०) „ „ „ (तृतीयखण्डम्) यन्त्रस्था
(११) „ „ „ (चतुर्थखण्डम्) „
(१२) शब्दरूपावलिः—समासचक्र-एकाक्षरीकोशादिविशिष्ट-परिशिष्टविराजिता ।=)

पुस्तकप्राप्तिस्थानम्—

**मास्टर खेलाड़ीलाल ऐण्ड सन्स,**
**संस्कृत-बुकडिपो,**
**कचौड़ीगली, बनारस सिटी।**

